योगव्यवच्छेदः' अन्यत्वनिष्ठावच्छेदकतानिरूपितान्यनिष्ठावच्छेदकताभिन्नयोगत्वनिष्ठावच्छेदकता-भिन्नावच्छेदकत्वानिरूपिततादृशावच्छेदकताद्वयनिरूपितयोगनिष्ठप्रतियोगिताकाभावरूपतया परिष्कार्यः। तथा च तादृशाभावत्वस्य पार्थान्ययोगव्यवच्छेदसाधारण्येन नाप्रसिद्धिदोषसंस्पर्शः।

गुरुवर्या अतीव मनोविनोदिनोऽविद्यन्त। यदा वयं ग्रीष्मावकाशे गुरुवराणां ग्रामावासेऽतिष्ठाम, तदैकस्मिन् दिने घृताभावेन नः शष्कुलीपचनपराङ्मुखत्वं विलोक्य विपण्णैस्तैर्निजगृहाभ्यन्तरात् पर्याप्तं घृतमुपनीयास्मान् प्रति प्रावाचि यद्—**'मा भवन्त उदासत। नेदं सामान्यगोपीघृतम्, किन्तु बालकृष्णगोपीसमुपहृतम्, अतो घृतमिदमादाय सप्रमोदं शष्कुलीः पचत'**। निशम्येदं मर्मवचो वयं विनम्रपरिहाससरसि निमग्ना अभूम।

काशीहिन्दूविश्वविद्यालये छात्रजीवन एव न्यायशास्त्राध्यापकपदे नियुक्तेन मयाऽध्यापनार्थं प्रार्थितैर्गुरुवर्यैरवादि यत् **'नातः परं त्वं पाठनीयः, यतः पक्षी स्वशावकान् तावदेव भक्ष्यदानेन पुष्णाति यावत्तेषां चक्षुरुन्मीलनं न भवति। चक्षुरुन्मीलने स्वपोषकाहारार्जने तानात्मनिर्भरान् करोति। किमहं पक्षिभ्योऽप्यपकृष्टबुद्धिः, येनेदानीमपि त्वदध्यापने स्वं व्यापृतं कुर्याम् ?'**

गुरुवर्या वेषाशनादिषु नितरां साधारणा अपि पूजालङ्करणप्रबन्धनेऽसाधारणा आसन्। पूजोपकरणपीठसहितानि पूजापात्राणि रजतमयानि। पूज्यदेवताप्रतिमास्तदासनपीठच्छत्रभूषणादीनि च हिरण्मयानि रक्षन्ति स्म। कथमेवं पूजोपकरणाडम्बरः क्रियत इत्येवं पृष्टैः गुरुभिरगादि यत् पूजासम्बद्धं सर्वं वस्तु तथा सुन्दरं समृद्धं च सम्पादनीयं यथा सौन्दर्यसमृद्धिदिदृक्षयाऽपि पूजैव जनैर्दृश्येत।

गुरुवर्या विभिन्नानां शास्त्राणां ग्रन्थान् विभिन्नवर्णानां वस्त्राणां वेष्टनेषु रक्षन्ति स्म। शास्त्रभेदेन वेष्टनभेदे कोऽभिप्रायो भवतामिति पृष्टैस्तैरुदतारि यद् व्याकरणं शैशवावस्थायामध्येतव्यं शास्त्रम्, यदाऽध्येतॄणां हृदयं स्वच्छं भवत्यतः श्वेतवर्णवेष्टने तद्ग्रन्थानां स्थापनम्। काव्यसाहित्यं शृङ्गारशास्त्रमतः शृङ्गाररसानुरूपपाटलवर्णवेष्टने तत्पुस्तकानामुपन्यासः। मीमांसा कर्मकाण्डशास्त्रमतो यागादिकर्मानुगुणपीतवस्त्रवेष्टने तदीयग्रन्थानामवस्थापनम्। वेदान्तः सन्न्यासशास्त्रमतः सन्न्यासाश्रमोचितगैरिकवर्णवस्त्रवेष्टने तद्ग्रन्थानां संरक्षणम्। न्यायशास्त्रं शोणितकरम् (खूनी) शास्त्रमतो रक्तवर्णवस्त्रवेष्टने तदीयग्रन्थानां विन्यासः।

गुरुवर्या विशिष्टाः शास्त्रविद्वांस इव कुशलाः प्रशासका अप्यासन्। तेषामेष गुणस्तदा प्राकटद् यदा ते मालवीयमहोदयैः साग्रहं संस्कृतमहाविद्यालयस्य प्रधानाचार्यकार्यभारस्वीकारायान्वरोधिषत। गुरुवर्यास्तत्पदेन तथा व्यवाहरन् यथा तत्प्रशासनावधौ न केनापि विदुषा छात्रेण कर्मचारिणा वा कदापि न्यायविपर्ययोऽदर्शि। 'अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वमन्यत' इत्यजस्यायोध्याराज्यासनमारूढस्य विषये कालिदासोक्तिर्गुरुवर्यविषये सर्वैरन्वर्थाऽन्वभावि।

गुरुवर्या अतीव परम्परावादिनो धार्मिका आसन्। धर्मविषये सनातनपरम्परातो लेशमात्रमपि विचलनं तेषामसह्यमासीत्। यदा मालवीयमहोदयैरस्पृश्येभ्यो मन्त्रदीक्षादानं प्रारम्भि,

यदा च दशविधब्राह्मणेषु वैवाहिकसम्बन्धस्य कर्त्तव्यतानिर्धारणे प्रायाति, तदा गुरुवर्यैरत्यन्तं स्पष्टभाषया तत्रात्मनो विमतिः प्राकाशि ।

एवमेव यदा दरभङ्गानरेशाः श्रीकामेश्वरसिंहमहोदयाः किञ्चित् कालं विदेशेषूषित्वा स्वदेशं प्रत्यागताः, तदा श्रोत्रियमैथिलत्वेन तत्सजातीया अपि तत्संसर्गं पर्यत्यजन् । न केवलमेतन्मात्रम्, अपि तु तदीयराज्ये निवासमनुचितं मत्वा सविधवर्तिनि नैपालराज्यभागे भूमिमक्रीणन्, महाराजसम्पर्कमागतान् जामातृसदृशान् स्वकीयान् सम्बन्धिनोऽपि त्याज्यानघोषयन् ।

गुणग्राहिता शिष्यवत्सलता च तेषामत्यद्भुताऽवर्तत । एकदाऽवच्छेदकत्वनिरुक्तेः क्रोडपत्रं पाठयद्भिस्तैर्मन्मुखादग्रे वक्ष्यमाणं वक्तव्यं प्रथममेव श्रुत्वा प्रतिभाप्रशस्तिवचोभिरहं भृशं प्रोदसाहिषि समसूचिषि च यत्ते मालवीयमहोदयान् मम बुद्धिं वर्णयित्वा मयि समावर्जयिष्यन्ति । वस्तुतो व्यधाय्यप्येवमेव तैर्यत्फलतयाऽपूर्णाचार्यपरीक्षामपि मां मालवीयमहोदया विश्वविद्यालये न्यायशास्त्राध्यापकपदे सहर्षं न्ययुञ्जन् ।

गुरवोऽस्माकं निपुणा नीतिविदोऽप्यविद्यन्त । अवरैः सह विवादो वर्जनीय इत्युपदेशस्तैः पद्यमिदं श्रावयित्वा दीयते स्म —

असमाने समानत्वं भविता मम विग्रहे ।
इति मत्वा ध्रुवं मानी मृगात् सिंहः पलायते ॥

भवन्ति केचनैवंविधाः पण्डिता ये स्वशिष्यमण्डले स्वकीयं वैदुष्यं विद्वज्जनान्तरापेक्षयाऽऽत्मीयं वैशिष्ट्यं च वर्णयन्तो गर्वं सन्तोषं महिमानं चानुभवन्ति, परं बहिर्विद्वद्भिः सह चर्चाप्रसङ्गपरिहाराय सततं निमित्तं गवेषयन्ति । एतादृशान् प्रति गुरुवरैः प्रस्तूयमानं वचनमिदमवधेयमस्ति—

मन्दिरतिमिरमपाकुरु दीप हिमांशुं किमाक्षिपसि ।
भवनाद् बहिर्मनागपि पवनात् परिशीलयात्मानम् ॥

न्यायशास्त्रज्ञानस्य वेदान्तशास्त्राणां तत्त्वबोधे विनियोगः कार्य इत्येतत्प्रतिपादनाय गुरुवर्यैरेका कथाऽस्मत्कर्णमुपानायि । सा चेत्थं यद् गौतमकल्पा राखालदासभट्टाचार्यमहोदया अस्मद्गुरुश्रीशङ्करतर्करत्नगुरवः काशिराजसमापण्डितश्रीताराकान्तभट्टाचार्याणां महामहोपाध्यायश्रीप्रमथनाथतर्कभूषणमहाभागपितॄणां ज्येष्ठाः सहोदरा आसन् । तेषां न्यायेऽसाधारण पाण्डित्यं प्रशंसन्तस्तदनुजा अब्रुवन् यद् भवानात्मनः प्रज्ञाभूमिं सम्यक् कर्षणेनोर्वरामकरोत्, किन्तु तत्र वेदान्तविद्याबीजं नावपत् ।

अस्मन्मिश्रगुरवः कर्कशतर्कप्रभृतिशास्त्रजातस्य प्रकाण्डाः पण्डिता एव नासन्; अपि तु सरससाहित्यमर्मस्पृशः कविकुलकुमुदकलाकरा अप्यासन् । तेषां गद्यपद्यमयरचनाः, गीतानि च विपश्चितां चेतश्चमत्कारमसृजन्—

गुञ्जन्मिलिन्दमुदितं चपलाश्लेषातिमञ्जुलं किमपि ।
अधिकालिन्दीकुञ्जं मरकतपुञ्जं चिरं जयति ॥

तदीयं पद्यमेतादृशं कं सहृदयं न चमत्कुर्यात्, कस्य वा विदुषो मनो न मोदयेत् ? वेदान्तगीतमिदम्—

यदि भववारिधिपारमुपैतुं वाञ्छसि तर्हि विचारय कोऽहम् ।
अविचारितरमणीयतया वसुसुतवनितादिषु सन्त्यज मोहम् ।।
उपनिषदनुसारेण समातनु सन्ततमात्मगतोहापोहम् ।
यो जनयति पालयति हरति परमात्माऽऽकाशप्रभृतिसन्दोहम् ।
बालकृष्णकविकथितमुरीकुरु गुरुवचनेन विभावय सोऽहम् ।।

प्रथमगुरुश्रीरघुवरप्रसादशुक्लस्योपकारमाजीवनं नैव विस्मरिष्यामि यत्स मामध्ययनाय काशीं प्रेष्येदृशानामवदातचरितानां प्रभूतसंस्कृतशास्त्रागाधज्ञानोदन्वतां गुरुवराणां चरणसरोज-सान्निध्यलाभाय प्राप्तावसरमकरोदिति शम् ।



# सर्वतो मेरुरुत्तरः

प० श्रीरघुनाथशर्मा
सम्मानितप्राध्यापकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

नमोऽस्तु ते व्यासविशालबुद्धे फुल्लारविन्दायतपत्रनेत्र ।
येन त्वया भारतवर्षभूत्यै प्रज्वालितो ज्ञानमयः प्रदीपः ।।

पुरा किल मुक्तावलीं पठतो मम दृष्टिपथमुपागतं पद्यमिदम्—'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः' इति । तस्मिन् काले खल्विदं पद्यं मया गुरौ ग्रन्थकृति चाचलया श्रद्धया प्रामाण्येन गृहीतम्; किन्त्विदानीं भौतिकविज्ञानेन कवलीकृते पुराणप्रामाण्ये ममाप्यत्र पद्ये विचिकित्सा जाता । एते च विकल्पाः समुत्थिताः—को मेरुः, क्व मेरुः, किं तस्य रूपम् ? तदा मया पद्यं स्मृतम्—'मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः' इति । इदं च पद्यं दृष्ट्वा मम चेतस्येषा भावना समुत्पन्ना । ईदृशस्तु कोऽपि पर्वतो जगति नास्ति, न श्रूयते च । स्नानदानव्रतादिसङ्कल्पे चास्माभिः प्रतिदिनम्–जम्बूद्वीपे भारतवर्षे इति पठ्यते । यदि एकमेव वर्षं भारताख्यम्, तर्हि सर्वेषामेव वर्षाणामिति कथं पठ्यते ? कथं च मेरोः सर्ववर्षोत्तरत्वमित्यपि चिन्ता समुदपद्यत । एवं चिन्तयतो मम भागवतदर्शनेनैष निश्चयो जातः, जम्बूद्वीपस्य मध्ये मेरुरिति ।

जम्बूद्वीपे च नव वर्षाणि सन्ति । मेरुं परित इलावृतवर्षम् । इलावृतवर्षस्य दक्षिणेऽस्ति वर्षत्रयम्—१. हरिवर्षम्, २. किंपुरुषवर्षम्, ३. भारतवर्षम् इति । इलावृतवर्षस्योत्तरत्राप्यस्ति वर्षत्रयम्–१. रम्यकवर्षम्, २. हिरण्मयवर्षम्, ३. कुरुवर्षञ्चेति । इलावृतवर्षस्योत्तरपश्चिमेऽस्त्येकं वर्षम्—केतुमालवर्षम् इति । इलावृतवर्षस्य च पूर्वत्राप्यस्ति भद्राश्ववर्षम् इति । अत्र मानं तु भागवतम् । तथा हि—यो वाऽयं द्वीपः कुवलयकमलकोशाभ्यन्तरकोशो नियुतयोजनविशालः समवर्तुलो यथा पुष्करपत्रम् । यस्मिन् नववर्षाणि नवयोजनसहस्रायामान्यष्टभिर्मर्यादागिरिभिः सुविभक्तानि भवन्ति । एषां मध्ये इलावृतं नामाभ्यन्तरवर्षम्—यस्य नाभ्यामवस्थितः सर्वतः सौवर्णः कुलगिरिराजो मेरुरिति । उत्तरोत्तरेणेलावृत्तं नीलः, श्वेतः, शृङ्गवान् इति त्रयो रम्यकः, हिरण्मयकुरूणां वर्षाणां मर्यादागिरयः प्राक् पश्चिमायता उभयतः क्षारोदावधयः । एवं दक्षिणेनेलावृतम्—निषधो हेमकूटो हिमालय इति प्राक् पश्चिमायताः—हरिवर्षकिंपुरुषभारतानां यथासंख्यं मर्यादागिरयः । तथैवेलावृतमपरेण माल्यवान् पूर्वेण च गन्धमादनः, आनीलनिषधायतौ दक्षिणोत्तरतः । तत्र माल्यवतः पश्चिमे केतुमालवर्षम् । तत्र गणराज्यानि बहूनि सन्ति । अतस्तत्र वर्षे स्वस्वकेतूनां माला वर्तते । अतस्तस्य वर्षस्य केतुमालमिति संज्ञा ।

गन्धमादनात् पूर्वेण तु भद्राश्ववर्षमिति । भद्रा अश्वा यस्मिन् इति व्युत्पत्त्या योगरूढम् । भूटान इति स देशः प्रसिद्धः । स तु पुरा क्षारोदधिं यावद् विस्तृत आसीत् । केतुमालवर्षे तु माल्यवतः पश्चिमे काबुलप्रभृतयः साम्प्रतं देशाः । इलावृतवर्षतस्तूत्तरत्र रम्यक-हिरण्मय-

भूमण्डलमध्यगतो जम्बूद्वीपः तन्मध्यगतो मेरुः तस्येदम् रेखाचित्रम्।

इदञ्च रेखाचित्रं भागवतं सम्यगवेक्ष्य निर्मितम्।



## अन्तरिक्षे ब्रह्माण्डमध्यगतो मेरुः



वर्षे तु नीलश्वेतशृङ्गवतां गिरीणां मध्ये मध्ये वर्तेते। कुरुवर्षं तु चीनाख्यमिदानीम्—यत्पुरा उत्तरकुरुनाम्ना व्यवहृतम्। दक्षिणेन तु इलावृतम्—निषधो हेमकूटो हिमालय इत्येषां मध्ये मध्ये हरिवर्षम्, किंपुरुषवर्षम् इति।

हिमालयस्य दक्षिणे तु भारतं वर्षम् इति। इलावृतवर्षस्य मध्ये मेरुः सुमेरुरिति वा पर्वतः सर्वेभ्यः पर्वतेभ्य उन्नतः, योऽधुना एवरेष्ट इति नाम्ना प्रसिद्धः। मेरोः चतसृषु दिक्षु चत्वारः पर्वता मेरोरवष्टम्भभूता मन्दरः, मेरुमन्दरः, सुपार्श्वः, कुमुद इति। एतेषु ह्रदा वनानि च सन्ति। तत्र मन्दरोत्सङ्गाद् अरुणोदा नाम्नी नदी पूर्वतो निःसरति, पश्चिमे मेरुमन्दरशिखराद् निःसृता जम्बूनदी सुदूरं गत्वा भारते वर्षे प्रवहति। यस्या रोधसि जाम्बूनदं सुवर्णमुत्पद्यते। अधुनाऽपि जम्बूरससिक्तया कृष्णमृत्तिकया सुवर्णं निष्पादयितुं शक्यतेऽनल्पविद्युत्पाकतक्षया। परीक्षणीयश्चैतत्। एतच्चात्र सुवर्णविधानं भागवतेऽपि वर्तते।

सुपार्श्वपर्वताद् निःसृताः पञ्च नद्य इलावृतवर्षमनुप्लावयन्ति। कुमुदपर्वताद् निःसृताः दश नदा इलावृत्तवर्षमेवानुप्लावयन्ति। मेरोर्मूल एवान्ये विंशतिः पर्वता उपक्लृप्ताः। ते च—१. कुरङ्गः, २. कुररः, ३. कुसुम्भः, ४. वैकङ्कः, ५. त्रिकूटः, ६. शिशिरः, ७. पतङ्गः, ८. रुचकः, ९. निषधः, १०. शिनीवासः, ११. कपिलः, १२. शङ्खः, १३. वैदूर्यः, १४. जारुधिः, १५. हंसः, १६. ऋषभः, १७. नागः, १८. कालञ्जरः, १९. नारदादय इति। एतेभ्योऽनन्तरञ्च मेरोः पूर्वत्र जठरदेवकूटौ, पश्चिमे पवनपारियात्रौ, दक्षिणे कैलासकरवीरौ, उत्तरे त्रिशृङ्गमकरौ पर्वताः सन्ति। तत्र जठरदेवकूटावुदगायतौ। पवन-पारियात्रौ कैलास-करवीरौ च प्रागायतौ। एवं त्रिशृङ्गमकरावप्युदगायतौ।

भगवतो विष्णोः पादोदकधारा तु मेरोर्मूर्ध्नि ब्रह्मसदने पतिता—सीता, अलकनन्दा, चक्षुः, भद्रा इति चतुर्भिर्नामभिर्व्यपदिष्टा। तत्र सीता ब्रह्मसदनात् केसराचलादिगिरिशिखरेभ्योऽधोऽधः प्रस्रवन्ती गन्धमादनमूर्धसु पतित्वाऽन्तरेण भद्राश्ववर्षं प्राच्यां दिशि क्षारसमुद्रमभिप्रविशति। एवं मेरोः पश्चिमे माल्यवच्छिखरान्निष्पतन्ती ततोऽनुपरतवेगा केतुमालमभिचक्षुः प्रतीच्यां दिशि सरित्पतिं प्रविशति। भद्रा चोत्तरतो मेरुशिरसो निपतिता गिरिशिखराद् गिरिशिखरमतिहाय शृङ्गवतः शृङ्गादवस्यन्दमाना उत्तरांस्तु कुरूनभित उदीच्यां दिशि जलधिमनुप्रविशति। तथैवालकनन्दा दक्षिणेन ब्रह्मसदनाद् बहूनि गिरिकूटान्यतिक्रम्य हेमकूटाद् हैमकूटान्यतिरभसतररंहसा लुठन्ती भारतमभिवर्षं दक्षिणस्यां दिशि जलधिमभिप्रविशति। तदेवं कः सुमेरुः क्व सुमेरुरिति प्रश्नौ समाहितौ।

इदानीं सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः, कथमिति प्रश्नः समाधीयते। सूर्येण हि दिशो विभज्यन्ते। तथा च भागवतम्—

> सूर्येण हि विभज्यन्ते दिशः खं द्यौर्मही भिदा।
> स्वर्गापवर्गौ नरका रसौकांसि च सर्वशः[1] ॥ इति।

एवञ्च यस्य पुरुषस्य यस्यां दिशि सूर्य उदेति सा तस्य प्राची, पृष्ठदेशे तु पश्चिमा। वामहस्त उदीची, दक्षिणहस्ते तु दक्षिणा। सूर्योदयश्चानियत इति दिशोऽप्यनियता इति।

---

१. श्रीमद्भागवतम्—५।२०।४५।

६

एवं भौमो मेरुर्निरूपितः। स च हेमाद्रिः—रत्नसानुश्च कथमिति प्रश्नोऽवशिष्यते। तदेतद् द्वयमेवमुपपद्यते। भौमो मेरुः खलु हिमावृतः। अतः सूर्यकिरणसम्पर्काद् हेमाद्रिरिव भाति। रविकिरणेषु सप्तापि रूपाणि सन्ति। तत्सम्पर्काद् मेरोः शिखराणि रत्नमयानीव भान्ति।

अथान्तरिक्षे ब्रह्माण्डमध्यगतो मेरुर्निरूप्यते—तत्र देवलोकस्य मध्ये मेरुः सर्वतः सौवर्णो रत्नसानुः सुराक्रीडभूतः। ततः पूर्वस्यां देवधानी नगरी अमरावती नाम। मेरोर्दक्षिणतो याम्या संयमनी। मेरोः पश्चिमे वारुणी निम्लोचनी। उत्तरतः सौम्या विभावरी। तासूदय-मध्याह्लास्तमयनिशीथानि भूतानां प्रवृत्तिनिवृत्तिनिमित्तानि मेरोश्चतुर्दिशम्। तत्रत्यानां दिवस-मध्यङ्गत एव सदाऽऽदित्यस्तपति सव्येनाचलं दक्षिणेन करोति। यत्रोदेति तस्य ह समानसूत्र-निपाते निम्लोचति यत्र ववचन स्यन्देनाभितपति तस्य हैष समानसूत्रनिपाते प्रस्वापयति तत्र गतं न पश्यन्ति ये तं समनुपश्येरन्।

यदा चैन्द्रयाः पुर्याः प्रचलते पञ्चदशघटिकाभिर्याम्यां सपादकोटिद्वयं योजनानां सार्ध-द्वादशलक्षाणि साधिकानि चोपयाति। एवं ततो वारुणीं सौम्यामैन्द्रीं च पुनस्तथान्ये च ग्रहाः सोमादयो नक्षत्रैः सह ज्योतिश्चक्रे समभ्युद्यन्ति सह वा निम्लोचन्ति। एवं मुहूर्त्तेन चतुस्त्रिंश-ल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्तते पुरीषु। यस्यैकं चक्रं द्वादशारं षण्नेमि त्रिणाभि संवत्सरात्मकं समामनन्ति, तस्याक्षो मेरोर्मूर्ध्नि कृतो मानसोत्तरे कृतेतरभागो यत्र प्रोतं रविरथचक्रं तैलयन्त्रचक्रवद् भ्रमन् मानसोत्तरगिरौ परिभ्रमति। तस्मिन्नक्षे कृतमूलो द्वितीयोऽक्षस्तुर्यमानेन सम्मितस्तैलयन्त्राक्षवद् ध्रुवे कृतोपरि भागः। रथनीडस्तु पट्त्रिंशल्लक्षयोजनायतस्तत्तुरीयविशालस्तावान् रविरथयुगो यत्र हयाश्छन्दोनामानः सप्तारुण-योजिता वहन्ति देवमादित्यम्—इति भागवतं दृष्ट्वा सुमेरोरिदं रेखाचित्रं विलिखितम्। यदत्र निबन्धे संलग्नं वर्तते।

अन्ते चायं निष्कर्षः—तत्तद्वर्षेषु दिशोऽनियताः। सूर्योदयस्यानियतत्वात्। एवञ्च यत्र वर्षे यस्यां दिशि सूर्य उदेति सा पूर्वा। पृष्ठस्था पश्चिमा। वामहस्तगतोत्तरा, दक्षिणहस्त-गता तु दक्षिणा इति। एष च दिग्विभागः शाङ्करभाष्ये छान्दोग्ये कृतः। सर्वेषाञ्च मेरुरुत्तरतः स्थितो भवति इति च तत्रोक्तम्। तथा चोदयनाचार्या अप्याहुः—

वयमिह पदविद्यां तर्कमान्वीक्षिकीं वा
यदि पथि विपथे वा वर्तयामः स पन्थाः।
उदयति दिशि यस्यां भानुमान् सैव पूर्वा
नहि तरणिरुदीते दिक्पराधीनवृत्तिः॥ इति।



# शब्दशक्तिविचारः

श्रीरामवदनशुक्लः
प्रधानाचार्यचरः
श्रीरामदेशिकसंस्कृतमहाविद्यालयः, दारागंज-प्रयागः

प्रत्यक्षप्रमाणं स्वसन्निकर्षैस्संयोगादिभिर्विषयैर्घटादिभिश्च सम्बद्धं सदेव प्रत्यक्षात्मकं ज्ञानमुत्पादयति, तथा शब्दोऽप्यर्थैः सम्बद्ध एवार्थविषयकबोधं जनयेत्। स च सम्बन्धो यथेन्द्रियाणां संयोगादिर्नियतस्तथा शब्दस्य सम्बन्धोऽर्थैः सह वृत्तिशक्तिलक्षणान्यतररूपानियता। तत्र प्रत्यक्षरूपं प्रमाणं स्वरूपतोऽर्थैस्सम्बद्धं बोधं जनयति, शब्दरूपं च प्रमाणं न तथा, अपि तु ज्ञातं सदेव तज्ज्ञानं तार्किकनये स्मरणात्मकम्। क्षणिकानां वर्णानां समूहस्य पदस्य तत्समूहस्य वाक्यस्य च वर्तमानत्वाभावेन प्रत्यक्षविषयत्वासम्भवात्। विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्यसम्बन्धेन विषयस्य कारणत्वात्।

केचित्तु, पूर्वपूर्ववर्णप्रत्यक्षजन्यसंस्कारजन्यस्मरणरूपज्ञानलक्षणसन्निकर्षैः स्वाव्यवहितोत्तरत्वसम्बन्धेन चरमवर्णे पूर्ववर्णानां भानात्, चरमवर्णस्य लौकिकसन्निकर्षेण श्रवणेन्द्रियेण भानाल्लौकिकालौकिकसन्निकर्षप्रयोज्यविषयतानिरूपकपदप्रत्यक्षस्य, तथा वाक्यान्तवर्णप्रत्यक्षकाले पूर्ववर्णपदानुभवजन्यसंस्कारजन्यस्मरणैः पूर्ववर्णपदानां वाक्यान्तवर्णे भानाल्लौकिकसन्निकर्षेण वाक्यान्तवर्णस्य भानाल्लौकिकालौकिकसन्निकर्षप्रयोज्यविषयतानिरूपकवाक्यप्रत्यक्षाद् वाक्यार्थबोधरूपश्शाब्दबोध इति वदन्ति।

यद्यपि तार्किकनये वाक्ये न वाक्यार्थनिरूपिता शक्तिर्वाक्यनिष्ठाकांक्षादिकारणभावादेव पदार्थसंसर्गज्ञानरूपशाब्दबोधस्योदयात् प्रयोज्यप्रयोजकवृद्धव्यवहारेऽपि वाक्यार्थबोधजनकत्वान्यथानुपपत्त्या पदार्थस्मृतेः कल्पना।

पदेषु स्मृतिजनकत्वान्यथानुपपत्त्या 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवति'[1] इति न्यायेन पदपदार्थसम्बन्धरूपशक्तिकल्पनेति, किन्तु वैयाकरणमते वाक्यस्य शाब्दबोधकारणत्वेऽवगते वाक्यार्थेनासम्बद्धस्य वाक्यस्य बोधकारणत्वासिद्धेः वाक्यार्थेन वाक्यस्य सम्बन्धरूपशक्तिकल्पना ज्यायसी, प्रमाणानां प्रमेयसम्बद्धानामेव प्रमेयविषयकबोधजनकत्वनियमात्।

प्रत्यक्षपदम् अक्षिणी प्रतीति विग्रहे 'लक्षणेत्थम्भूताख्यानभाग'[2] इत्यादिना कर्मप्रवचनीयत्वे कर्मप्रवचनीययुक्ते द्वितीयेति द्वितीयायां लक्षणेनाभिप्रती आभिमुख्ये इति समासेऽव्ययीभावे 'शरत्प्रभृतिभ्यः' इत्यत्र पठितेन 'प्रतिपरिसमनुभ्योऽक्ष्णः' इति गणवचनेन टचि सामासिकलुकि भत्वे यस्येति लोपे यणि च निष्पन्नम्। तस्याक्षिज्ञाप्योऽर्थः। वृत्तावक्षिशब्दस्येन्द्रियपरत्वेन्द्रियजन्यज्ञानविषयः प्रत्यक्षपदार्थस्सम्पन्नः। ज्ञाप्यत्वस्य प्रतिद्योत्यत्वेनेन्द्रियजन्यज्ञानविषयत्वरूपतायां तस्य भावत्वेन प्रकाररूपत्वाज्ज्ञानरूपतायां पर्यवसानात् प्रत्यक्षपदस्येन्द्रियजन्यप्रमार्थो बोध्यः।

---

१. व्युत्पत्तिवादः–पृ० ३।

२. अष्टाध्यायी–१।४।९०।

प्रत्यक्षपदस्यार्शाद्यजन्तत्वे प्रत्यक्षप्रमासम्बन्धिज्ञानजनकार्थकतया प्रमाणमपि द्वितीयोऽर्थो बोध्यः। इत्थं प्रत्यक्षपदस्य प्रमाप्रमाणोभयार्थकत्वम्। अत एव प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति प्रत्यक्षप्रमाणविभागश्रेण्यां प्रत्यक्षपदस्य पाठः। अथ च प्रत्यक्षानुमित्युपमितिशाब्दभेदादयथार्थानुभवश्चतुर्विध इति प्रमानुभवविभागश्रेण्यां प्रत्यक्षपदस्य पाठश्च सङ्गच्छेते।

स्वरूपतः शब्दाच्छाब्दबोधानुदयाच्छ्रुतादपि पदादर्थेनागृहीतसम्बन्धादिष्टशाब्दबोधानुदयाद् गृहीतवृत्तिकाच्छ्रुतात् पदादपि घटपटादिरूपाद् घटादित्वेन घटादिनिरूपितवृत्तिज्ञानविरहे इष्टघटत्वाद्यवच्छिन्नविषयकशाब्दबोधानुदयात्, घटत्वाद्यवच्छिन्ननिरूपितवृत्तिज्ञानसत्त्वेऽपि शाब्दबोधप्राक्क्षणे वृत्तिसंस्कारस्यानुद्बोधे शाब्दबोधानुदयात्, तद्धर्मावच्छिन्नविषयकशाब्दबोधत्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः। वैशिष्टचञ्च—स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यस्याश्रयपदविषयकत्वोभयसम्बन्धेन।

तथा हि—घटत्वाद्यवच्छिन्ननिरूपितशक्तिग्रहे सति तज्जन्यसंस्कारस्योद्बोधे सति घटादिपदज्ञाने सति घटादिपदस्य प्रत्यक्षे चैत्रसमवेते सति घटत्वाद्यवच्छिन्ननिरूपितवृत्तिविषयकोद्बुद्धसंस्काराधिकरणचैत्रवृत्तित्वस्य घटत्वाद्यवच्छिन्ननिरूपितवृत्त्याश्रयपदविषयकत्वस्य च सत्त्वाद् घटत्वाद्यवच्छिन्नविषयकशाब्दबोधो घटादिपदेभ्यः साधूपपद्यते। कारणदले वृत्तिनिवेशात् पदेन येन केन सम्बन्धेन जनकत्वेनाश्रयत्वेन चोपस्थितयोश्चैत्राकाशयोर्न घटपदेन बोधः। शब्दस्यार्थेन सम्बन्धो वृत्तिरूपः, इन्द्रियाणां विषयैर्यथा संयोगादिः। एवं वैशिष्टचयोः पदविषयकत्वस्य ज्ञान उद्बुद्धवृत्तिविषयकसंस्कारसामानाधिकरण्यस्य च निवेशाद् अश्रुतपदादनुद्बुद्धवृत्तिसंस्कारसचिवपदान्न शाब्दबोधः। तद्धर्मावच्छिन्नत्वनिवेशाद् व्युत्क्रमेण शक्तिग्रहजन्यसंस्कारसत्तायां न घटत्वाद्यवच्छिन्नविषयकशाब्दबोधोदयः। वृत्तिश्च शक्तिलक्षणान्यतररूपा। शक्तिश्च[1]—अस्माच्छब्दादयमर्थोबोद्धव्य इत्यर्थविशेष्यिका। इदंपदम् इममर्थं बोधयत्विति पदविशेष्यिका वा ईश्वरेच्छारूपा। इदमर्थाभिन्नशब्दजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यतानिरूपिकेश्वरेच्छा, इदमर्थाभिन्नार्थविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितपदनिष्ठविशेष्यतानिरूपिकेश्वरेच्छारूपा वेति यावत्। तात्पर्यञ्च साक्षाच्छाब्दबोधजनकतावच्छेदकं तात्पर्यज्ञानस्य शाब्दबोधकारणत्वात्, ईश्वरेच्छारूपा शक्तिस्तु स्वज्ञानजन्योपस्थितिद्वारेण शाब्दबोधप्रयोजिका।

'एकादशेऽह्नि पिता नाम कुर्यात्' इत्येकादशाहकालिकपित्रुच्चरितनाम्नां देवदत्तादीनां नामत्वेन सामान्यरूपेणेश्वरेच्छाविषयत्वात्, तत्रापीश्वरेच्छारूपशक्तिसिद्धिः। आधुनिकशब्दमात्रे न सा शक्तिरिति भ्रमेण लक्षणया वा बोधः। सा चेश्वरेच्छा ईश्वरनिष्ठा पदार्थनिष्ठा पदनिष्ठा न सिद्ध्येदिति स्वनिरूपितबोधजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन पदनिष्ठा, स्वनिरूपितबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनार्थनिष्ठा बोध्या। सेश्वरेच्छा नानेश्वरेच्छाकल्पनाकृतगौरवेणैका स्वीकार्या। एवं सति सेच्छा घटपदाद् घटत्वविशिष्टो बोद्धव्यः, पटपदात् पटत्वविशिष्टो बोद्धव्यश्चेत्यादिसमूहालम्बनात्मिका भवेत्।

---

१. द्र० वै० सि० ल० मञ्जूषा, शक्तिनिरूपणम्, पृ० १६, चौखम्बीयं संस्करणम्—१९६३ ई०।

एवं सति सेच्छा स्वनिरूपितबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन यथा घटे तथा पटेऽपि सिद्ध्येत् । इति घटपदशक्तिः पटेऽपि व्यवह्रियेत, तथा गङ्गापदजन्यतीरबोधस्यापि सन्मात्रविषयकत्वेनेश्वरेच्छाया विषयत्वाद् गङ्गापदेऽपि तीरनिरूपितशक्तिमत्त्वापत्तिरिति न वाच्यम्, तीरनिष्ठेश्वरेच्छीयविशेष्यताया बोधविषयत्वनिष्ठप्रकारतानिरूपितत्वेऽपि गङ्गापदे तीरनिरूपितशक्तिव्यवहाराभावेन ईश्वरेच्छायाः स्वविषयनिरूपितत्वसम्बन्धावच्छिन्नगङ्गापदत्वावच्छिन्नप्रकारतानिरूपितजन्यतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नजन्यतात्वावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नबोधत्वावच्छिन्नप्रकारतानिरूपितविषयतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्न—विषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धस्य तीरेऽभावेन तीरे गङ्गापदस्येश्वरेच्छारूपशक्त्यसिद्धेः । तथा च गङ्गापदे ईश्वरेच्छाशक्तिर्गङ्गापदं प्रवाहत्वावच्छिन्नं बोधयतु इत्याकारा । स्वविषयनिष्ठत्वसम्बन्धावच्छिन्नभगीरथरथखातावच्छिन्नप्रवाहत्वावच्छिन्नप्रकारतानिरूपितविषयतात्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपकत्वसम्बन्धावच्छिन्नविषयतात्वावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नबोधत्वावच्छिन्नप्रकारतानिरूपितजनकतात्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नाश्रयतात्वावच्छिन्न—विशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाश्रयतात्वावच्छिन्नगङ्गापदत्वावच्छिन्नविशेष्यतासम्बन्धेन गङ्गापदे ईश्वरेच्छारूपा शक्तिर्वर्तते ।

एवं स्वविषयनिष्ठत्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितविषयतात्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपकत्वसम्बन्धावच्छिन्नविषयतात्वावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नबोधत्वावच्छिन्नप्रकारतानिरूपितजनकतात्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसंबंधावच्छिन्नजनकतात्वावच्छिन्नप्रकारतानिरूपिताश्रयतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाश्रयतात्वावच्छिन्नप्रकारतानिरूपितघटपदत्वावच्छिन्न—विशेष्यतासम्बन्धेन घटपदनिष्ठेश्वरेच्छाशक्तिर्घटपदे वर्तते, तथा स्वविषयनिरूपितत्वसम्बन्धावच्छिन्नघटपदत्वावच्छिन्नप्रकारतातिरूपितजन्यतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूप—सम्बन्धावच्छिन्नजन्यत्वावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्व-सम्बन्धावच्छिन्नबोधत्वावच्छिन्नप्रकारतानिरूपितविषयतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूप-सम्बन्धावच्छिन्नविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छारूपा शक्तिर्घटत्वविशिष्टेऽर्थे वर्तते ।

तथा स्वविषयनिरूपितत्वसम्बन्धावच्छिन्नपटपदत्वावच्छिन्नप्रकारतानिरूपितजन्यतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नजन्यतात्वावच्छिन्नप्रकारतानिरूपितबोधत्वा—वच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नबोधत्वावच्छिन्नप्रकारतानिरूपितविषयतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नवषियतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता—सम्बन्धेन पटत्वविशिष्टेऽर्थे वर्तते । एवं सति नेश्वरेच्छारूपाया एकस्या अपि शक्तेस्सत्त्वेन घटपदशक्तेः पटे प्रसङ्गावकाशः ।

वस्तुतो निरुक्तपरम्परासम्बन्धेन नेश्वरेच्छाया अधिकरणत्वं घटादिपदपदार्थेषु । अत ईश्वरेच्छाविशिष्टा विशेष्यताशक्तिरिति स्वीकार्यम् ।

वैशिष्ट्यञ्च—स्वनिरूपितत्वस्वविषयनिष्ठत्वसम्बन्धावच्छिन्नपदार्थतावच्छेदकावच्छिन्नप्रकारतानिरूपितविषयतात्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपकत्वसम्बन्धावच्छिन्नविषयतात्वावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नबोधत्वावच्छिन्नप्रकारतानिरूपितजनकतात्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नजनकतात्वावच्छिन्नप्रकारतानिरूपिताश्रयतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाश्रयतात्वावच्छिन्नप्रकारतानिरूपितपदत्वावच्छिन्नविशेष्यतास्वविषयनिरूपितत्वसम्बन्धावच्छिन्नपदत्वावच्छिन्नप्रकारतानिरूपितजन्यतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नजन्यतात्वावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नबोधत्वा—वच्छिन्नप्रकारतानिरूपितविषयतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नविषयतात्वावच्छिन्नप्रकारतानिरूपितपदार्थत्वावच्छिन्नविशेष्यताऽन्यतरत्वैतदुभयसम्बन्धेन ।

**प्राचीनवैयाकरणाः**

इन्द्रियेषु विषयप्रतीतिजनकतारूपयोग्यता यथाऽनादिसिद्धा[1], तथा शब्देष्वप्यर्थप्रतीतिजनकतारूपा योग्यताऽनादिसिद्धा । आधुनिकसङ्केतितेषु वृद्धयादिपदेष्वपि स्वरूपयोग्यबोधकारणताऽस्त्येव । तच्छक्तिज्ञानञ्चेश्वरादिसङ्केतज्ञानेन जायते । आधुनिकेषु पित्रादिसङ्केतज्ञाने जायते । शक्तिज्ञानस्य बोधकारणतायां सङ्केतज्ञानस्य सापेक्षत्वे तद्धेतोस्तत्त्वे किं तेनेति न्यायेन सङ्केतस्यैव शक्तित्वमस्त्विति न वाच्यम्, सङ्केतश्चास्माच्छब्दादयमर्थो बोद्धव्य इतीच्छारूपत्वेन तस्यार्थविशेषविषयकबोधजनकत्वबोधविषयत्वघटितरूपेण सम्पन्नतया तज्ज्ञानस्य शाब्दबोधकारणत्वस्वीकारापेक्षया बोधजनकतात्वेन बोधजनकताया ज्ञानस्य कारणत्वकल्पनायां लाघवात् ।

**मीमांसकमते**

बोधजनकतावच्छेदकतया कार्यानुकूलधर्मरूपेणातिरिक्तपदार्थतयासिद्धायाश्शक्तेर्ज्ञानस्य कारणतायामपि शाब्दबोधजनकतावच्छेदकत्वेन शाब्दबोधकारणत्वकल्पनायां गौरवाद् बोधजनकतात्वेन तस्या ज्ञानस्य कारणतायां लाघवात् । बोधजनकत्वस्य शक्तित्वे तीरबोधजनकत्वस्य गङ्गापदेऽपि सत्त्वेन लक्षणोच्छेदप्रसङ्ग इति न वाच्यम्, लक्षणाया अप्रसिद्धशक्तिरूपत्वात् । शक्तौ प्रसिद्धत्वञ्च बाधज्ञानतात्पर्यानुपपत्त्यादिप्रयोज्यज्ञानाविषयत्वम्, अप्रसिद्धत्वञ्च बाधतात्पर्यशक्यसम्बन्धज्ञानोद्बुद्धसंस्कारविषयत्वम् । अपि च लक्षणास्वीकारे लक्षणाज्ञानोपस्थित्योर्लक्षणाज्ञानजन्योपस्थितिशाब्दबोधयोश्च कार्यकारणभावकल्पनायां गौरवम् ।

शक्तिमात्रवादिनां केवलशक्तिज्ञानोपस्थित्योः शक्तिज्ञानाधीनोपस्थितिशाब्दबोधयोश्च कार्यकारणभावः कल्पनीयः ।

**केवलशक्तिवादिनां मते**

तीरविषयकबोधं प्रति तीरत्वावच्छिन्ननिरूपितगङ्गापदनिष्ठशक्तिज्ञानाधीनोपस्थितेः कारणत्वम् । तीरत्वावच्छिन्नबोधं प्रत्येव तीरत्वावच्छिन्ननिरूपिततीरपदनिष्ठशक्तिज्ञानाधीनोपस्थितेश्च कारणत्वम् । परस्परव्यतिरेकव्यभिचारवारणायाव्यवहितोत्तरत्वघटितकार्यकारणभावकल्पनाकृतगौरवमपि । तथा गङ्गापदनिष्ठतीरत्वावच्छिन्ननिरूपितशक्तितज्जन्योपस्थित्योस्तीरत्वावच्छिन्ननिरूपिततीरपदनिष्ठशक्तिज्ञानतदुपस्थित्योः कार्यकारणभावकल्पनाकृतम् । अथ च

1. द्र० वाक्यपदीयम्—३।३।२९ ।

व्यतिरेकव्यभिचारवारणायाव्यवहितोत्तरत्वसामानाधिकरण्यघटितकार्यकारणभावकल्पनाकृतञ्च गौरवम्, लक्षणावादिनामिव सममेवेति न वाच्यम्, लक्षणावादिना तीरनिरूपिता शक्तिः तीरपदेऽङ्गीक्रियते, तस्याः शक्तेर्गङ्गापदे भ्रमदशायां तीरत्वावच्छिन्ननिरूपितगङ्गापदनिष्ठशक्तिज्ञानाधीनोपस्थितिशाब्दबोधयोः तीरत्वावच्छिन्ननिरूपितगङ्गापदनिष्ठशक्तिभ्रमात्मकज्ञानतदुपस्थित्योः कार्यकारणभावस्तीरत्वावच्छिन्नशाब्दबोधं प्रति तीरत्वावच्छिन्ननिरूपिततीरपदनिष्ठशक्तिज्ञानाधीनोपस्थित्योः कारणत्वे एककार्यं प्रति कारणद्वयस्वीकृतौ प्रसक्तस्य व्यतिरेकव्यभिचारस्य वारणायाव्यवहितोत्तरत्वसामानाधिकरण्यघटितकार्यकारणभावकल्पनं लक्षणावादिशक्तिवादिनोस्समम् । तीरत्वावच्छिन्नविषयकशाब्दबोधं प्रति तीरत्वावच्छिन्ननिरूपितगङ्गापदनिष्ठलक्षणाज्ञानाधीनोपस्थितेः कारणत्वकल्पनाकृतं व्यतिरेकव्यभिचारवारणफलकाव्यवहितोत्तरत्वसामानाधिकरण्यनिवेशप्रयुक्तं गौरवञ्चाधिकं लक्षणावादिनां शिरसि समापतितम् ।

तीरत्वावच्छिन्नविषयकबोधं प्रति तीरत्वावच्छिन्ननिरूपितवृत्तिज्ञानाधीनोपस्थितेस्तीरत्वावच्छिन्नविषयकोपस्थितिं प्रति तीरत्वावच्छिन्ननिरूपितवृत्तिज्ञानस्य च कारणत्वे वृत्तित्वेन तीरनिरूपितगङ्गापदनिष्ठलक्षणाया ज्ञानस्य तीरत्वावच्छिन्ननिरूपितगङ्गापदनिष्ठशक्तिभ्रमस्य च वृत्तिविषयत्वेनैककारणतयैव निर्वाहे लक्षणाघटितकार्यकारणभावकृतं गौरवं लक्षणावादिनां न सम्भवतीति न च वाच्यम्, वृत्तित्वस्य शक्तिलक्षणाऽन्यतररूपत्वे शक्तिभेदसमानाधिकरणलक्षणाभेदवत्प्रतियोगिकभेदवत्त्वस्य शक्तिलक्षणाऽन्यतरत्वेनाथ च लक्षणाभेदसमानाधिकरणशक्तिभेदवद्भिन्नत्वस्य विनिगमनाविरहादन्यतरत्वस्य स्वीकारे शक्तिज्ञानत्वेन कारणता कल्पनाऽपेक्षयातिगौरवात् । तदर्थं यदि वृत्तित्वं शाब्दबोधजनकपदार्थोपस्थितिजनकपदपदार्थसम्बन्धत्वं स्वीक्रियते, तादृशवृत्तित्वज्ञानस्य शाब्दबोधघटितत्वेन शाब्दबोधात् प्रागनिष्पन्नत्वेन वृत्तिज्ञानस्य शाब्दबोधं प्रति कारणत्वासम्भवस्यात् । तद्विषयकशाब्दबोधं प्रति शक्तिप्रयोज्योपस्थितेः कारणत्वम्, लक्षणाजन्योपस्थितिरपि शक्तिप्रयोज्यैव, लक्षणायाः शक्यसम्बन्धरूपताऽङ्गीकारात् ।

अतो न लक्षणावादिनाम्मते लक्षणाज्ञानघटितकार्यकारणभावकल्पनाकृतं गौरवमिति न च वाच्यम्; तीरविषयकबोधम्प्रति गङ्गापदनिष्ठशक्तिप्रयोज्योपस्थितेः कारणत्वे गङ्गापदात् प्रवाहतीरसम्बन्धाग्रहवतः प्रवाहनिरूपितशक्तिग्रहवतश्च प्रवाहविषयिण्या गङ्गापदनिष्ठशक्तिप्रयोज्योपस्थितेस्सत्त्वात् तीरविषयकबोधापत्तिः । अतस्तीरविषयकबोधं प्रति तीरनिरूपितशक्तिज्ञानाधीनोपस्थितेः कारणत्वं वाच्यं स्यात् । तत्कारणत्वं गङ्गापदनिष्ठतीरत्वावच्छिन्ननिरूपितशक्तिज्ञाने नास्ति, गङ्गापदे तन्निरूपितशक्तेरनङ्गीकारात्[1] ।

अत उक्तबोधं प्रति तीरत्वावच्छिन्ननिरूपितगङ्गापदनिष्ठलक्षणाज्ञानाधीनोपस्थितेरेव कारणत्वं वाच्यम् इत्युक्तगौरवं लक्षणावादिनां तदवस्थमेव । यदि तद्विषयकशाब्दबोधं प्रति शक्तिप्रयोज्यतद्विषयकोपस्थितेः कारणत्वम्, गङ्गापदात्तीरसम्बन्धाग्रहवतश्शक्तिप्रयोज्यतीरविषयकोपस्थितेरभावान्न तीरबोधातिप्रसङ्गः, तथापि 'घटमानय' इति वाक्यं हस्तिनश्च स्मरत एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवतीति न्यायेन घटपदार्थहस्तिपकपदार्थविषयकसमूहालम्बनोपस्थितेर्हस्तिपकविषयकत्वेन घटपदजन्यतन्निष्ठशक्तिसहकृतोक्तसमूहालम्बनोपस्थितेर्हस्तिपकविषयकशाब्दबोधापत्तिः । अतस्तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्ननिरूपितशक्ति-

१. द्र० वै० सि० ल० मञ्जूषा, लक्षणाप्रकरणम्, पृ० ९७ ।

ज्ञानाधीनतद्धर्मावच्छिन्नविषयकोपस्थितिः कारणमिति स्वीकर्तव्यम्, तदा गङ्गापदेन तीरत्वावच्छिन्नविषयकबोधोत्पत्तौ तीरत्वावच्छिन्ननिरूपितगङ्गापदनिष्ठलक्षणाज्ञानाधीनतीरत्वावच्छिन्नविषयकोपस्थितेर्लक्षणावादिनामधिकं कारणत्वकल्पनं तदवस्थमेव। अतो बोधकत्वं शक्तिरिति पक्षो निर्बाध इति केचित्।

अत्रोच्यते—शाब्दबोधजनकं घटपदं शक्तमिति वाक्यादुद्देश्यतावच्छेदकविधेययोरैक्याच्छाब्दबोधानापत्तिः। शक्तत्वस्य बोधजनकत्वरूपत्वेनोद्देश्यतावच्छेदकस्य बोधजनकत्वस्य चैकरूपत्वात्। अपि च—व्यवहारेण शक्तिग्रहस्थले घटमानयेति प्रयोजकवृद्धोच्चरितवाक्येन घटानयने प्रयोज्यवृद्धस्य प्रवृत्तौ व्युत्पित्सुना बालेन प्रयोज्यवृद्धे कार्यत्वविशिष्टघटानयनविषयककृतावनुमितायां ततः कार्यत्वविशिष्टघटानयनकृत्याकार्यत्वविशिष्टघटानयनविषयकज्ञानेऽनुमिते ततः 'घटमानय' इति वाक्ये कार्यत्वविशिष्टघटानयनविषयकबोधजनकत्वेऽनुमिते घटमानयेति वाक्ये कार्यत्वविशिष्टघटानयनरूपार्थसम्बन्धाभावे कार्यत्वविशिष्टघटानयनविषयकबोधजनकत्वानुपपत्त्या तदुपपत्तये 'घटमानय' इति वाक्ये कार्यत्वविशिष्टघटानयननिरूपितशक्तिः कल्प्यमाना बोधकत्वरूपा बोधकत्वघटितेश्वरेच्छारूपा च न भवितुमर्हति। बोधजनकत्वस्य बोधजनकत्वातिरिक्तशक्तिकल्पनामन्तरेणानुपपन्नत्वात्। न ह्यनुपपन्नस्य बोधजनकत्वस्यानुपपन्नेनैव बोधजनकत्वेनोपपत्तिस्सम्भवति, अनुपपन्नस्य पीनत्वस्य तदतिरिक्तेन रात्रिभोजनकर्तृत्वेनोपपत्तिदर्शनात्। एवं बोधजनकत्वघटिताया ईश्वरेच्छाया अपि पदपदार्थसम्बन्धत्वं न भवितुमर्हति, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वेन बोधकत्वघटितेश्वरेच्छाबुद्धौ बोधकत्वज्ञानस्य कारणत्वात्।

अपि च प्रमाणप्रमेययोर्बोध्यबोधकभावसम्बन्धातिरिक्तसम्बन्धस्यैव सम्बन्धत्वमनुभवसिद्धम्। यथेन्द्रियघटाद्योर्बोद्धव्यबोधकभावसम्बन्धातिरिक्तस्य संयोगादेः सम्बन्धत्वमस्ति। इत्यमिच्छारूपस्य सम्बन्धत्वाऽङ्गीकारे वह्निधूमयोरपि धूमाद्वह्निज्ञानं जायतामितीच्छाविषयत्वस्यैव सम्बन्धत्वेऽङ्गीकर्तव्ये किं वह्निधूमयोर्व्याप्यव्यापकभावसम्बन्धस्वीकारेण व्याप्यपरिष्कारप्रपञ्चेन च? तस्माद् नेश्वरेच्छाया बोधकत्वस्य च पदपदार्थसम्बन्धरूपशक्तित्वमुचितम्, यत्तु बोधजननसामर्थ्यमेव शक्तिर्दाहजननसामर्थ्यस्य वह्निनिष्ठस्य कार्योत्पादकत्वेऽपि सम्बन्धस्यापेक्षितत्वात्। वह्नीन्धनसम्बन्धे सत्येव वह्नौ सामर्थ्यस्य दहनरूपकार्यजनकत्वम्। दीपघटयोस्संयोगे सत्येव दीपे घटप्रकाशकारित्वं सामर्थ्यस्य। अतः शाब्दबोधरूपकार्यकारित्वं शब्दनिष्ठसामर्थ्यस्य सामर्थ्यातिरिक्ते शब्दार्थयोस्सम्बन्धे स्वीकृत एव। अयं सम्बन्धः सामर्थ्यस्यापि सम्बन्धः। उक्तश्च भर्तृहरिणा—

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः[1]॥ इति।

अत एव घटरूपयोर्घटे रूपस्य गुणत्वम्, रूपघटयोः समवायसम्बन्धे सत्येवेति रूपस्य गुणस्य समवाये गुणत्वं व्यवह्रियते। तस्मात् पदपदार्थयोः सम्बन्धान्तरं वाच्यवाचकभावस्वरूपं शक्तिरूपमङ्गीकर्तव्यम्। घटभूतलादीनां संयोगादिवत्तस्य सम्बन्धस्य ग्राहकत्वं तादात्म्यस्येश्वरेच्छाया उपदेशस्य चेति सुधियो विभावयन्तु।

• • •

---

१. वाक्यपदीयम्—३।३।५।

# आख्यातैकवचनसम्बन्धिविमर्शः

प० श्रीरुद्रप्रसादोऽवस्थी

सम्मानितप्राध्यापकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

आख्यातैकवचनसम्बन्धे नैयायिकानां मतत्रयं दृश्यते । तथा हि—कस्यचिद् नैयायिकस्य मते 'चैत्रः पचति' इत्यादावाख्यातैकवचनस्यैकत्वमर्थः । तस्य च प्रथमाप्रकृत्यर्थे चैत्रादावन्वयः, तत्रैव सुबर्थैकत्वस्याप्यन्वयः । न चान्यतरवैय्यर्थ्यमिति वाच्यम्, एकधर्मावच्छिन्ने एकमेवैकत्वं भासते सम्भेदे नान्यतरवैय्यर्थ्यमिति न्यायात् । तदुक्तं पदवाक्यरत्नाकरे गोकुलनाथोपाध्यायैः **'सुबाख्यातोभयोपस्थितव्यक्तेरेव प्रातिपदिकार्थविशेषणतया भानव्युत्पत्तेः, वचनवत्'**[1] इति ।

गदाधरभट्टाचार्यैश्च तिबादेरेकत्वमर्थः । अस्तु नाम, परन्तु तदेकत्वस्य प्रथमाप्रकृत्यर्थेनान्वयः । तदुक्तं तैरेव व्युत्पत्तिवादे—**'अस्तु वा तेन रूपेण तिङेकवचनस्याप्येकत्वे शक्तिः, तथापि तज्जन्यैकत्वोपस्थितेः शाब्दबोधोपयोगित्वे मानाभावः'**[2] इति ।

जगदीशतर्कालङ्कारैश्च नाख्यातैकवनस्य तिबादेरेकत्वमर्थः । तदुक्तं तैरेव—तदेकवचनस्य ( आख्यातैकवचनस्य ) नैकत्ववाचित्वम्, मानाभावात् । तस्यायं भावः—'घटोऽस्ति, चैत्रोऽस्ति' इत्यादौ यद्यप्येकत्वविशिष्टो घटः, एकत्वविशिष्टश्चैत्र इति बोधो भवतीति घटादावेकत्वान्वयार्थमेकत्वोपस्थितिरपेक्षिताऽस्तीति, तथापि प्रथमैकवचनस्यैकत्वसंख्यार्थकत्वमाख्यातैकवचनस्य वा स्वीकर्तव्यमिति संशये 'चैत्रेण दृष्टो घटः' इत्यत्राख्यातं तु नास्त्येव, यस्य घटादिविशेषणीभूतैकत्वोपस्थापकत्वं स्यादिति सुबेकवचनस्यैकत्वसंख्याबोधकताया आवश्यकत्वात् । 'घटोऽस्ति' इत्यादावपि सुबेकवचनस्यैव एकत्वबोधकत्वं युक्तम्, न त्वाख्यातैकवचनस्य । तस्मादाख्यातैकवचनस्यैकत्वं नार्थ इति ।

वैय्याकरणैस्तु 'चैत्रः पचति' इत्यादावाख्यातैकवचनस्यैकत्वमर्थः, तस्य तिङर्थे कर्त्तरि अन्वयः । तत्रैवाभेदेन चैत्रादेरन्वयः, कर्त्तुश्च व्यापारे । एवञ्च चैत्राभिन्न एकाश्रयवृत्तिर्व्यापार इति बोधोऽङ्गीक्रियते ।

यत्तु 'चैत्रेण दृष्टो घटः' इत्यादौ तिङन्तविरहेऽपि सुपा एव घटादावेकत्वबोधे आख्यातैकवचनस्य नैकत्वमर्थ इति, तन्न, उक्तस्थलेऽपि 'अस्ति' इत्यस्याध्याहारात् । एवञ्चैकत्वार्थकत्वमाख्यातैकवचनस्य स्वीकर्त्तव्यम्, प्रथमैकवचनस्य वेति संशये विनिगमनाविरहात् सुबेकवचनस्यैवाख्यातैकवचनस्याप्येकत्वार्थकत्वे बाधकाभावः ।

न च 'चैत्रेण दृष्टो घटः' इत्यादौ 'अस्ति' इत्यस्याध्याहारे प्रमाणाभाव इति वाच्यम्, प्रातिपदिकार्थसूत्रे पतञ्जलिनोद्धृताया अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽपि 'अस्ति'

---

१. पदवाक्यरत्नाकरः ।  २. व्युत्पत्तिवादः—आख्यातविवरणम् ।

इति स्मृतेरेव प्रमाणत्वात् । तेन यत्र तिङन्तं न श्रूयते, तत्रापि 'अस्ति' इत्यस्याध्याहारः कर्त्तव्य इति न तादृशं वाक्यं सम्भवति। यत्र केवलेन प्रथमैकवचनेनैवैकत्वं बोध्येदित्याख्यातैकवचनस्याप्येकत्वमर्थं इति फलितम्। एवं स्थिते आख्यातैकवचनमेकत्वे शक्तम्, एकवचनत्वात् प्रथमैकवचनवदित्यनुमानमप्याख्यातैकवचनस्यैकार्थकत्वे प्रमाणम्।

न चेदमप्रयोजकम् 'द्व्येकयोर्द्विवचनैकवचने'[1] इति सूत्रस्यैव प्रयोजकत्वात्।

किञ्च, उक्तसूत्रमप्याख्यातैकवचनस्यैकार्थकत्वे प्रमाणम्, तेन सूत्रेण प्रातिपदिकाद् धातोश्चैकत्ववाचकमेकवचनस्यैकार्थकत्वे प्रमाणम्, तेन सूत्रेण प्रातिपदिकाद् धातोश्चैकत्ववाचकमेकवचनमेकत्वविवक्षायां द्वित्वविवक्षायाञ्च द्वित्ववाचकं द्विवचनञ्च विधीयत इति।

न चास्तित्वस्य चैत्रादौ विवक्षितत्वे विवक्षितबोधान्यथानुपपत्त्यैवास्तीत्यस्याध्याहारस्य सिद्धत्वेनोक्तस्मृतेरनुवादकत्वेन न क्रियाध्याहारे प्रामाण्यमिति वाच्यम्, अनुवादकत्वे विधेर्वैयर्थ्यप्रसङ्गात्।

न चैवमपि स्वस्य परस्य च शौर्यं यत्र प्रतिपिपादयिषितम्, अतीतस्य स्वपित्रादेर्वा शौर्यमात्रं प्रतिपिपादयिषितम्, तत्र 'त्वं शूरः, अहं च मत्पिता च' इत्यत्र 'अस्ति' इत्यस्यायोग्यतया तदाध्याहारस्यासम्भवेन तिङन्तविरहेऽपि सुबेकवचनस्यैकत्वार्थबोधकत्वे व्यतिरेकव्यभिचारेणाख्यातैकवचनस्यैकत्वमर्थं इति वाच्यम्, उक्तस्मृतावस्तीति धातुसामान्यस्योपलक्षकमित्यस्य प्रथमेति मध्यमोत्तमयोः, भवन्तीति लकारसामान्यस्योपलक्षकमित्यस्य स्वीकृतत्वात्।

न चोक्तायाः स्मृतेर्विधायकत्वे 'न विधौ परः शब्दार्थः' इति न्यायविरोधाद् नोक्तलक्षणा युक्तेति वाच्यम्, 'गोभिः श्रृणीत मत्सरम्' इत्यादौ विधिवाक्येऽपि लक्षणादर्शनेन तस्यौत्सर्गिकत्वात्, अर्थवादानुरोधेन 'न विधौ परः शब्दार्थः' इत्यर्थकत्वाच्च स्पष्टं चेदमद्वैतसिद्धौ ज्ञानविधिभङ्गनिरूपणप्रसङ्गे।

किञ्च 'सर्वं वाक्यं क्रियायां परिसमाप्यते' इत्यभियुक्तोक्तेः 'सहयुक्तेऽप्रधाने'[2] इति सूत्रस्थभाष्यात् 'तिङ्सामानाधिकरणे प्रथमा' इति वार्त्तिकाच्च तिङन्तं विना प्रातिपदिकात् प्रथमा न सम्भवति। अतः 'चैत्रेण दृष्टो घटः' इत्यादौ प्रथमासिद्धये तिङन्ताध्याहारः सर्वत्रावश्यं कर्त्तव्य इति।

एतेन विवक्षितार्थप्रतिपत्तेः 'पुत्रस्ते जातः, कन्या च गर्भिणी' इत्यादौ प्रयुक्तशब्दमात्रादेव निष्पत्तौ नात्र क्रियापदाध्याहारः। एवं विशेषणानन्तरनिवृत्तितात्पर्यके 'नीलमिदम्, न तु रक्तम्' इत्यादावपि न क्रियाध्याहार इत्यपास्तम्, उक्तस्थलेष्वपि 'अस्ति' इति पदाध्याहारस्य कर्त्तुं शक्यत्वात्। एतत् सर्वमभिप्रेत्यैवोक्तं नागेशेन कारकप्रकरण इदमपि सूत्रं क्रियायोगे एव प्रवर्तत इति।

यत्तु तिवादिपदत्वप्रकारकज्ञानजन्योपस्थितित्वेन तच्छाब्दबोधहेतुत्वे (एकत्वबोधहेतुत्वे, मानाभाव इत्युक्तं तन्न, उक्तशाब्दबोधहेतुत्वे मानाभाव इत्यत्रैव मानाभावात्। तदुक्तं शब्दशक्तिप्रकाशिकाटीकायाम्—तित्वादिना पदज्ञानजन्यैकत्वोपस्थितेः शाब्दाजनकत्वे मानाभावः। विनिगमनाविरहेणापि तस्याः (तादृशोपस्थितेः) तथात्वम् (हेतुत्वम्) सेत्स्यतीति।

१. अष्टाध्यायी—१।४।२२। २. अष्टाध्यायी—२।३।१९।

यदपि प्रथमाप्रकृत्यर्थे आख्यातैकवचनार्थैकत्वस्यान्वयः, तन्न, गौरवात् 'प्रकृत्यर्थान्वित-स्वार्थबोधकत्वं प्रत्ययानाम्'' इति न्यायविरोधाच्च। अतः 'चैत्रः पचति' इत्यादौ तिबर्थाश्रये आख्यातैकवचनैकार्थैकत्वस्यान्वयः। तिङन्तसमभिव्याहारे तिङर्थाश्रये चैत्रादेरभेदेनान्वयात्। चैत्रपदोत्तरप्रथमार्थैकत्वस्य प्रकृत्यर्थे चैत्रादौ नान्वयः। एकत्वार्थान्वयेऽभेदसम्बन्धावच्छिन्न-प्रकारताभिन्नप्रकारताप्रयोजकपदजन्योपस्थितेः कारणत्वात्। तदुक्तं व्युत्पत्तिवादे—'तदर्थक-पदोत्तरविभक्त्या संख्याबोधेनाभेदसंसर्गावच्छिन्नप्रकारताभिन्नतदर्थविषयताशालिशाब्दबोधसामग्री अपेक्षिता' इति। एवञ्च 'चैत्रः पचति' इत्यादौ चैत्राभिन्नैकत्वविशिष्टाश्रयवृत्तिविक्लित्यनुकूलो व्यापार इति बोधो वैयाकरणसम्मतस्तिबादेरेकवचनस्यैकत्वमर्थः, तज्जन्योपस्थितिश्चैकत्वबोधे कारणम्, तादृशैकत्वञ्च तिबर्थकर्त्तरि अन्वेतीति सर्वमवदातम्।

● ● ●

१. व्युत्पत्तिवादः—पृ० १०६।

# संस्कृतव्याकरणे वाराणस्या योगदानम्

डॉ० रामप्रसादत्रिपाठी
प्राचीनव्याकरणदर्शनागमविभागाध्यक्षः, दर्शनसंकायाध्यक्षश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ।।

संस्कृतवाङ्मये व्याकरणशास्त्रस्य महिमा प्राचीनकालादद्यावधि अक्षुण्णरूपेण प्रचलन्नस्ति । एतच्च व्याकरणमद्यत्वे पाणिनीयमेव, इदञ्च व्याकरणं समस्तं भारतं व्याप्नुवद् विशेषतो वाराणसीक्षेत्रं व्यापत् । परमिदं महत् खेदस्थानं यद् व्याकरणप्रधानेऽस्मिन् वाराणसीक्षेत्रे वैयाकरणानां परम्परायाः प्राचीनमितिवृत्तं न प्राप्यते । यत्किमपि लभ्यते, तज्जनश्रुतिमाधारीकृत्यैव । तथा हि—

**महामुनिः पतञ्जलिः (नागकूपः, वाराणसी)**

वाराणस्यामुत्तरभागे 'जैतपुरा' इत्यभिधाने महालये नागकूपनामकं प्रसिद्धं स्थानं वर्तते । तत्रैकोऽस्ति महान् कूपः, यत्र महामुनेः पतञ्जलेः पाषाणप्रतिमाऽस्ति । श्रावणे मासि शुक्लपक्षे नागपञ्चम्यामस्याः प्रतिमाया विशेषतः पूजनं विधीयते, विद्वद्भिः सम्भूय शास्त्रार्थचर्चा च क्रियते । अद्याप्येषा परम्परा प्रचलति । महाभाष्यस्य रचना अत्रैव जातेत्यपि प्रसिद्धिरस्ति ।

**महामहोपाध्यायः कैयटः**

समस्ते महाभाष्ये प्रदीपनामकटीकाया रचयिता श्रीकैयटोपाध्यायो व्याकरणाध्ययनाय कश्मीरप्रदेशाद् वाराणसीमागत आसीत् । नागकूपे एकस्मिन् अश्वत्थवृक्षे निवसतो ब्रह्मराक्षसाद् भाष्यमधीत्य काश्मीरं गतवानयं महानुभाव इत्यप्यस्ति जनश्रुतिः ।

**प्रसादटीकाकारः श्रीविट्ठलः**

प्रक्रियाकौमुदीकारस्य श्रीरामचन्द्रस्य पौत्रोऽयं श्रीविट्ठलः कालभैरवसन्निधौ निवसन्नासीत् । प्रक्रियाकौमुद्याः प्रसादनाम्नीं टीकां विरचय्यान्ते कालभैरवं स्वपितामहञ्च नमस्याञ्चकार ।

**श्रीभट्टोजिदीक्षितः**

१७०० शतकस्य पूर्वपादे वाराणस्यां महान् वैयाकरणः श्रीभट्टोजिदीक्षितः प्रादुरभवत् । पूर्वप्रक्रियाग्रन्थेषु काचिन्न्यूनतामवलोक्य 'वैयाकरणसिद्धान्तकौमुदी'नामकं पाणिनीयव्याकरणसिद्धान्तप्रकाशकं सारवन्तमेकं महान्तं ग्रन्थं निर्माय जीवनकाल एव महतीं ख्यातिं लेभे । प्रख्यातवैयाकरणाः श्रीशेषकृष्णाचार्या अस्य गुरव आसन् । सिद्धान्तकौमुद्यां स्थले स्थले

काशिकादिग्रन्थानां शोधनं कृतमस्ति । यथा 'पद्दनोमास्०' इति सूत्रे 'आसन्' शब्दस्यासन्नादेश इति काशिकायामुक्तम्, तद्विषये सिद्धान्तकौमुद्यामुच्यते 'आस्य शब्दस्यासन्नादेश' इति । हव्या जुह्वान आसनि, आस्नो वृकस्येत्यादिश्रुतिवाक्यार्थसङ्गत्यै इदमेवोचितं प्रतिभाति । अतोऽग्नेरास्ये (मुखे) हव्यानि जुह्वान इत्यर्थो भवति, न त्वग्नेरासने कुण्डे वेद्यां वेत्यर्थः ।

एवमेव 'वृत्रघ्नः' 'वृत्रघ्णः' इत्यत्राचार्यमाधवेन प्रातिपदिकान्तनुम्विभक्तिषु चेति वैकल्पिकं णत्वमुक्तम् । तदपि 'हादेशेषु कुव्यवाये णत्वप्रतिषेधो वक्तव्यः' इति भाष्यवार्त्तिक-विरुद्धमिति णत्वरहितमेव रूपं समीचीनमिति कौमुद्युक्तिरेव साध्वी प्रतिभाति ।

अष्टाध्याय्याः शैलीं विनाशितवती एषा सिद्धान्तकौमुदी इति कथनमपि न शोभनम् । प्रायोऽत्र ग्रन्थेऽष्टाध्याय्याः क्रमो रक्षित एव; यथा संज्ञापरिभाषाप्रकरणयोः प्रथमाध्यायः, सन्धिप्रकरणे प्रायः षष्ठाध्यायः, स्त्रीप्रत्ययप्रकरणे चतुर्थाध्यायः, कारकप्रकरणे प्रथमद्वितीयाध्यायौ, समासप्रकरणे द्वितीयाध्यायः, तद्धितप्रकरणे चतुर्थः पञ्चमश्चाध्यायः, तिङन्तप्रकरणे प्रायस्तृतीयाध्यायः, कृदन्तप्रकरणे बाहुल्येन तृतीयाध्यायः, स्वरप्रकरणे षष्ठाध्याय इत्येवं ग्रन्थस्य भूयसि भागे अष्टाध्यायी सुरक्षिताऽस्ति । क्वचिल्लिङ्गादिप्रकरण एव व्यत्यासः कृतोऽस्ति प्रयोगसिद्धिं सम्पादयितुम् । तत्र तत्रावश्यमष्टाध्याय्या आश्रयेण सूत्रार्थः करणीयः । सारल्येन सूत्रार्थज्ञानाय अष्टाध्याय्या आश्रयणं परमावश्यकमित्यत्र नास्ति मनागपि सन्देहः ।

सिद्धान्तकौमुद्या निर्माणं वाराणस्यामेवाभवदित्यत्रैको मङ्गलश्लोकोऽपि प्रमाणतयोप-न्यसितुं शक्यते, यश्च श्लोको स्वयमेव ग्रन्थे श्रीदीक्षितेनोपन्यस्तोऽस्ति—

भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी ।
प्रीत्यै भूयाद् भगवतोर्भवानीविश्वनाथयोः ॥ इति ।

अस्याः सिद्धान्तकौमुद्या एका सारगर्भिता टीका प्रौढमनोरमाभिधा स्वयमेव भट्टोजि-दीक्षितेन विरचिताऽस्ति । शब्दकौस्तुभस्य, भूषणसारमूलभूतकारिकाणाञ्चापि रचनाऽस्यैवाऽस्ति ।

**भूषणकारः श्रीकौण्डभट्टः**

भट्टोजिदीक्षितेन निर्मितानां चतुःसप्ततिसंख्याककारिकाणां व्याख्यानभूतो वैयाकरण-सिद्धान्तभूषणसारनामको ग्रन्थो श्रीकौण्डभट्टेन निर्मितः । उक्तञ्च—

भट्टोजिदीक्षितैः श्रेष्ठैर्निर्मिताः कारिकाः शुभाः ।
कौण्डभट्टेन व्याख्याता यथाशास्त्रं सुविस्तरम्[1] ॥ इति ।

अयञ्च कौण्डभट्टो भट्टोजिदीक्षितस्य भ्रातुष्पुत्रः, तथाहि—

वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा ।
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये[2] ॥ इति ।

---

१. वैयाकरणभूषणसारः, स्फोटनिरूपणम् । २. वैयाकरणभूषणसारः, मंगलाचरणम् ।

अत्र ग्रन्थे—

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद् विवर्त्तते ।।

इति प्रथममंगलश्लोकेन ज्ञायते यदयं ग्रन्थकर्त्ता महानुभावो भगवतोर्हरिहरयोरभेदेनोपासकः, शब्दनित्यत्ववादसमर्थकश्च । द्वैतध्वान्तनिवारणादिफलिकामित्यनेन द्वैतवादपोषकोऽयमित्यपि निश्चेतुं शक्यते । ढुण्ढिगौतमजैमिनीय इत्यनेन ढुण्ढिराजगणपतिप्रणतिसूचनया वाराणसीक्षेत्रमेवास्य ग्रन्थस्य निर्माणभूमिरित्यपि ज्ञायते । अस्मिन् वैयाकरणभूषणसारे श्रीहरिवल्लभाख्यविदुषा विरचिता दर्पणनाम्नी टीकाऽतीव सारगर्भिताऽस्ति ।

**शाब्दिकचक्रचूडामणिः श्रीनागोजिभट्टः**

एकोनविंशतितमे विक्रमाब्दे पूर्वपादे वाराणसी पुरी एकं महान्तं वैयाकरणं प्रादुरभावयत्, येन व्याकरणं शास्त्रं नव्यन्यायशैल्या नवीनधारायां प्रवाहितम् । वैयाकरणसिद्धान्तकौमुद्यां बृहच्छब्देन्दुशेखरो लघुशब्देन्दुशेखरश्चेति द्वे टीके, परिभाषेन्दुशेखरः, समस्ते महाभाष्ये उद्द्योताभिधा टीका, गुरुमञ्जूषा, वैयाकरणसिद्धान्तलघुमञ्जूषा, परमलघुमञ्जूषा चेत्याद्याः शब्दशास्त्रीयाः प्रशस्ततमा ग्रन्था अन्येऽपि तत्तच्छास्त्रविषयकाः श्लाघ्यतमा ग्रन्था अनेन महानुभावेन सम्पादिताः । तत्राध्येतॄणां सुखेन बोधो भवतु इत्येतदेवोद्देश्यमासीद् ग्रन्थानां सम्पादने । उक्तं च 'बालानां सुखबोधाय परिभाषेन्दुशेखरम्' इति श्रूयते च प्रायः प्रौढे वयस्यप्यनधीतविद्योऽयमेकस्या विद्वत्सभायाः सापमानं बहिर्निस्सारितो भगवत्याः श्रीवागीश्वरीदेव्याश्चरणयोरन्तिकं गत्वा निरम्बुदिनत्रयं तपश्चचार । प्रसन्ना सा जगन्माता सर्वविद्यापारंगतो भवतात् त्वमिति वरमस्मै ददौ । तदनु श्रीहरिदीक्षिताद् व्याकरणशास्त्रमेकवर्षेण, रामशास्त्रिणः सकाशाद् न्यायशास्त्रं चैकवर्षेणैव समधीत्य परम्परां संरक्षन् सकलशास्त्रपारदृश्वा बभूव ।

अदसीयशिष्यपरम्पराऽपि ज्यायसी आसीत्, तत्र वैद्यनाथपायगुण्डेप्रभृतयो महान्तो वैयाकरणा आसन् । एतस्य पितुर्नाम शिवभट्ट इति, मातुश्च नाम सती देव्यासीत् । वाराणस्यां सिद्धेश्वरीनामिकाया वीथिकायाः समीपे 'कश्मीरहवेली' इत्यभिधानस्य भवनस्य सन्निधाने एवैतदीयं गृहमासीत् । श्रृङ्गवेरपुरस्य रामसिंहाख्यनृपतेर्द्वादशरूप्यकाणि जीविकारूपेण प्रतिमासमनेन प्राप्यन्ते स्म ।

**ग्रन्थप्रचारः**

एतस्य महानुभावस्य ग्रन्था अपि झटिति प्रचारपथमागताः । यतो हि तत्तद्ग्रन्थानां भावबोधिकाष्टीकाः शीघ्रं निर्मिताः । तत्र लघुशब्देन्दुशेखरे चिदस्थिमालाटीकैतस्य शिष्येण वैद्यनाथपायगुण्डे इत्याख्येन रचिता । सदाशिवभट्टेन भट्टीनामिका टीका, भैरवमिश्रेण चन्द्रकला, उदयङ्करपाठकेन ज्योत्स्ना, राघवेन्द्राचार्येण विषमी, दण्डभट्टेनाभिनवचन्द्रिका रचिता । कतिपयवर्षेभ्यः पूर्वं गुरुप्रसादशास्त्रिणा वरवर्णिनी नामिका टीका सम्पादिता । परिभाषेन्दुशेखरे वैद्यनाथस्य गदा, भैरवमिश्रस्य भैरवी, राघवेन्द्राचार्यस्य त्रिपथगा, रामकृष्ण-(तात्या) शास्त्रिणो भूतिः, जयदेवमिश्रस्य विजया अति श्लाघ्याष्टीकाः सन्ति । एवमेव वैयाकरणसिद्धान्तलघु-

मञ्जूषायामपि कला-कुञ्जिकानामके द्वे टीके ग्रन्थस्यादिमे भागे रत्नप्रभाभिधा टीका च सन्ति।

**शाब्दिकमूर्धन्यो राजारामशास्त्री**

श्रीनागोजिभट्टस्य शिष्यपरम्पराया भविष्यतिकाले कीदृशं स्वरूपं बभूव, तद्विवेचनं लुप्तप्रायमस्ति। प्रायः शतवर्षेभ्यः पूर्वं वाराणस्यां राजारामशास्त्री महान् वैयाकरणोऽभवत्। एतस्य शिष्यः श्रीबालशास्त्री दिव्यप्रतिभासम्पन्नो बभूव। काशिकराजकीयसंस्कृतमहाविद्यालये (क्वीन्स कालेज इत्याख्ये) प्राध्यापकपदमप्यलञ्चकार। व्याकरणशास्त्रीयां परिष्कारशैलीं सुदृढाञ्चकार।

अदसीयशिष्यपरम्परायां श्रीदामोदरशास्त्री, श्रीशिवकुमारशास्त्री, श्रीरामकृष्ण-(तात्या) शास्त्री, श्रीगङ्गाधरशास्त्री—इत्येवमादयो महान्तो वैयाकरणा अभूवन्। इमे सर्वे काशिकराजकीयसंस्कृतमहाविद्यालये प्राध्यापकपदमलङ्कुर्वन्तो व्याकरणशास्त्रस्य परिष्कारशैलीमध्यापनकलया शास्त्रार्थपद्धत्या चात्यन्तं विशदीचक्रुः। श्रीदामोदरशास्त्रिभारद्वाजस्य शिष्येषु श्रीहरिनारायणत्रिपाठी (तिवारीजी), श्रीरामयशस्त्रिपाठी (महाशय जी), श्रीपूर्णचन्द्राचार्यः, श्रीसभापतिशर्मोपाध्यायः, श्रीरामाज्ञापाण्डेयः, श्रीगणपतिशास्त्री (मोकाटे), श्रीचन्द्रधरशर्मा, श्रीकालीप्रसादमिश्रः, श्रीरामभवनशर्मोपाध्यायो विशेषत उल्लेखनीयाः सन्ति।

श्रीशिवकुमारशास्त्रिणः शिष्येषु, श्रीजयदेवमिश्रः, अच्युतत्रिपाठी, हाराणचन्द्रभट्टाचार्यः, श्रीजगन्नाथशर्मा—इत्यादयो महतीं ख्यातिं गताः। श्रीशिवकुमारशास्त्रिणः पाण्डित्यं व्याकरण एव न, अपि तु न्यायवेदान्तादिशास्त्रेष्वप्यासीत्। एतदीयकल्पनाप्रसूता एव परिष्काराः श्रीजयदेवमिश्रेण शास्त्रार्थरत्नावल्याम्, परिभाषेन्दुशेखरस्य विजयाटीकायां व्युत्पत्तिवादस्य जयाटीकायां संगृहीता इत्यपि सुप्रसिद्धमस्ति। श्रीगंगाधरशास्त्रितैलङ्गस्य शिष्येषु श्रीनित्यानन्दपन्तपर्वतीयस्य नामातिश्लाघनीयमस्ति। येन लघुशब्देन्दुशेखरे वाराणसेयपरम्पराया रक्षिका एका टीका सम्पादिता। या चाद्यत्वे पठनपाठनपरम्परायां विद्यते। एतस्यैव शिष्येषु श्रीगोपालशास्त्रिनेने, अनन्तशास्त्री (फडके) इत्यादयः प्रख्याता विद्वांसोऽभवन्।

श्रीशिवकुमारशास्त्रिणः समय एव श्रीनकछेदरामशास्त्री, श्रीकाशीनाथशास्त्री च (षट्शास्त्री) विशेषरूपेण कीर्तनीयौ। श्रीनकछेदरामशास्त्रिण एव शिष्यः श्रीहरिहरकृपालुशास्त्री उद्भटो विद्वान् बभूव। यदीयशिष्येषु श्रीसूर्यनारायणशुक्लः, रामानुज-ओझा इत्यादयो लब्धख्यातयो बभूवुः। श्रीकाशीनाथशास्त्रिणः शिष्येषु श्रीहरिनाथशास्त्री, रामवृक्षशास्त्री इत्यादयः प्रख्यातयशस्का आसन्।

श्रीजयदेवमिश्रस्य शिष्येषु श्रीराजनारायणपाण्डेयस्य, श्रीवेणीमाधवशुक्लस्य, श्रीरामयशस्त्रिपाठिनः शिष्येषु श्रीदेवनायकाचार्यस्य विशिष्टा प्रसिद्धिरासीत्। श्रीहरिनारायणत्रिपाठिनः ( तिवारी जी ) शिष्येषु श्रीबलदेवदत्तशर्म-श्रीश्रीदत्तशर्म-श्रीरामदत्तशर्म-श्रीभास्करानन्दशर्म्म-श्रीनरसिंहत्रिपाठि-श्रीगुरुप्रसादशास्त्रिप्रभृतयो लब्धप्रतिष्ठा वैयाकरणा अभवन्। एषां पूर्वोक्तानां विदुषामेव परम्पराद्यत्वे वाराणस्यामन्यत्रापि च भारते व्याकरणविद्यां रक्षन्ती आस्ते।

**अष्टाध्याय्या विकासः**

महामुनिपाणिनिविरचिताया अष्टाध्याय्या अध्यापनं सूत्राणां क्रममाधारीकृत्य भवति स्म। एकस्य सूत्रस्यार्थबोधनायावश्यकता स्यात्तर्हि पूर्वसूत्रादपि तत्पदमनुवर्त्य सूत्रार्थो बोध्यते स्म। परन्त्वस्मिन् क्रमे कस्यचित् प्रयोगस्य साधनाय विभिन्नाध्यायस्य सूत्राणामेकस्मिन् स्थले योजनामन्तरा काठिन्यमागतम्। फलतः काशिकावृत्तेरध्ययनं शिथिलमभवत्। रूपावतार-रूपमाला-प्रक्रियाकौमुदीप्रभृतयो ग्रन्था निर्मिता अभूवन्, यैश्च लक्ष्यसिद्धौ सौकर्यं सम्पादितम्; परन्तु तेष्वप्यासीत् काचिन्न्यूनता यस्याः पूर्तये श्रीभट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुद्या रचना कृता। यद्यपि प्रयोगसाधने सौकर्यमनेन ग्रन्थेन भवति, तथाऽप्यष्टाध्याय्याः क्रमरक्षाऽपि यथाशक्ति विहितैवाऽस्ति। तथा चोक्तम्—

पूर्वार्द्धे कथितास्तुर्यः पञ्चमाध्यायवर्त्तिनः।
प्रत्यया अथ कथ्यन्ते तृतीयाध्यायगोचराः[1]॥

सन्धिप्रकरणे प्रायः षष्ठाध्यायस्थसूत्राणां स्वरप्रकरणेऽपि तेषामुल्लेखो विद्यते। काशि-कादिग्रन्थेषु यानि स्खलितानि तान्यत्र शोधितानि। एतेनास्य कौमुदीग्रन्थस्य महान् प्रचारो जातः, प्रौढमनोरमा-तत्त्वबोधिनी-लघुशब्देन्दुशेखरप्रभृतयष्टीका एतत्प्रचारे महान्तमुपकारं साधयामासुः।

पुनरपि सुकुमारमतीनां छात्राणां कृते भट्टोजिदीक्षितस्य शिष्येण श्रीवरदराजाचार्येण मध्यसिद्धान्तकौमुदी, लघुसिद्धान्तकौमुदी, सारसिद्धान्तकौमुदी च निर्मिता।

एषां प्रक्रियाप्रधानग्रन्थानां प्रचारेणैको महान् दोषः समायातः, अध्ययनाध्यापनपरम्प-रायां मूलभूताऽष्टाध्यायी विस्मृता। यतः सूत्राणां क्रमज्ञानं विनष्टम्, सूत्रार्थावबोधो दुष्करो जातः। वृत्तिवाक्यरटनेन सूत्रार्थबोधः कथञ्चित् कर्तुं शक्यः, इत्येषा स्थितिर्महते खेदाय समागता। अतश्छिन्ने मूले नैव शाखा न पत्रमित्युक्तिं स्मरन्तो वैयाकरणा अष्टाध्याय्या अपि स्मरणं कुर्वन्तो गम्भीरं पाण्डित्यं सञ्चिन्वन्तु।

महामहोपाध्यायः कैयटः-भट्टोजिदीक्षित-नागोजिभट्टप्रभृतिभिः शास्त्रधुरन्धर-विद्वद्भिः समादृतस्य पाणिनीयव्याकरणस्य विद्वत्समाजे विशिष्टा प्रतिष्ठाऽभूत्। एभिर्विद्वद्वरैः स्व-सूक्ष्मप्रतिभया विचारोत्तेजकग्रन्थानां निर्माणेनास्य सम्प्रदायस्य प्रवाह एकस्यां विशिष्टधारायां प्रवाहितः। एतावताऽद्याप्यदसीयपरम्पराऽविच्छिन्नरूपेण प्रचलन्ती वर्त्तते। भविष्यति कालेऽपि बुद्धिसूक्ष्मतासम्पादनाय व्याकरणविद्यारसिका अस्मिन् परम्पराप्रवाहेऽवश्यं स्नात्वा बुद्धेर्मलमपाकरिष्यन्ति।

**अस्या विशिष्टधारायास्त्रयो भागाः**

अस्यां विशिष्टधारायां त्रयो भागा दृश्यन्ते—१. वाक्यार्थबोधाङ्गभूतं पदार्थचिन्तनम्, २. न्यासः, ३. परिष्कारश्च।

१. तत्र प्रथमेन पदार्थचिन्तनरूपांशेनैतद् व्याकरणशास्त्रं दर्शनशास्त्रेषु परिगणितम-भवत्। यद्यपि महामुनिव्याडिकृतेन सङ्ग्रहग्रन्थेनास्य शास्त्रस्य दर्शनत्वमति प्राचीनम्। तथाऽपि

---

१. वै० सि० कौ०—भ्वादिगणे मङ्गलश्लोकः।

कालक्रमेण विलुप्तं तद् महाभाष्यकृता पतञ्जलिना समुद्धृतम्। पुनश्च मध्ये विलुप्तं वाक्यपदीयकृता भर्तृहरिणोज्जीवितम्। पुनस्तदेव वैयाकरणभूषणसार-वैयाकरणसिद्धान्तलघुमञ्जूषादिग्रन्थद्वारा संवर्द्धितम्। एतत्प्रसङ्गे न्यायदर्शनेन मीमांसादर्शनेन च स्थले स्थले संघर्षोऽभवत्। यथा—न्यायदर्शने कर्तृप्रत्ययस्थले फलावच्छिन्नो व्यापारः, कर्मप्रत्ययस्थले व्यापारावच्छिन्नं फलं धात्वर्थो भवति, कृतिस्तिङर्थः कथ्यते।

मीमांसादर्शने—फलमात्रं धात्वर्थः, तिङर्थो भावना इत्युच्यते, व्याकरणदर्शने तूक्तमताभ्यां भिन्न एव दृष्टिकोणोऽस्ति। तथा हि—प्राचीनवैयाकरणानां नये फलव्यापारौ धात्वर्थौ, कर्तृकर्मान्यतररूप आश्रयस्तिङर्थः। नवीनवैयाकरणानां श्रीनागोजिभट्टप्रभृतीनां नये कर्तृप्रत्यये फलविशिष्टो व्यापारः। कर्मप्रत्यये तु व्यापारविशिष्टं फलं धात्वर्थस्तिङर्थः स एव।

न्यायदर्शने—'चैत्रो ग्रामं गच्छति' इति वाक्यात् 'ग्रामवृत्तिकर्मत्वनिरूपकसंयोगावच्छिन्नव्यापारानुकूलवर्तमानकालावच्छिन्नकृतिमान् एकत्वविशिष्टश्चैत्रः' इति प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधो भवति।

मीमांसादर्शने—'चैत्राभिन्नैकाश्रयवृत्तिर्ग्रामवृत्तिकर्मत्वनिरूपकसंयोगानुकूला वर्त्तमानकालिकी भावना' इति भावनामुख्यविशेष्यकः शाब्दबोधो भवति।

व्याकरणदर्शने यद्यपि मीमांसादर्शनवदेव बोधः केवलं भावनास्थाने व्यापार उच्यते। तथाऽपि प्रक्रियायामस्ति महान् भेदः। मीमांसाशास्त्रे 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इति नियमेन[1] तिङर्थस्य भावनायाः प्राधान्यं स्वीक्रियते। व्याकरणशास्त्रे तु 'भावप्रधानमाख्यातम्' इति निरुक्तवाक्यात्[2]। 'क्रियाप्रधानमाख्यातम्' इति भाष्यवचनाच्च[3] व्यापारस्य प्राधान्यमभ्युपेयते। पुनश्च नव्यवैयाकरणनये 'क्रियते या सा क्रिया'[4] इत्येवंरीत्या क्रियापदस्य फलपरत्वमपि स्वीकृत्य कर्मप्रत्यये फलमुख्यविशेष्यको बोधोऽभ्युपेयते। अस्तु—एतेषु विषयेषु विशेषतो विचाराय तत्तद्ग्रन्थानां परिशीलनं परमावश्यकम्। एषु संघर्षेषु वैयाकरणाः कदाऽपि पश्चात्पदा न जाताः।

स्फोटतत्त्वविमर्शेऽपि वैयाकरणानामपूर्वप्रतिभायाः परिचयो भवति। एषां मते ध्वनिरूपः शब्दोऽनित्यः, स्फोटरूपो नित्यः, अर्थबोधने स्फोटस्यैव शक्तिर्न ध्वनेः। आचार्येण भर्तृहरिणा—'समस्तं जगद् नित्यस्य शब्दब्रह्मणो विवर्त्तभूतमस्ति'[5] इति सिद्धान्तितम्। स्फोटतत्त्वस्य समर्थनायानेके ग्रन्था विरचिताः। तत्र श्रीनागोजिभट्टविरचिता स्फोटसिद्धिर्महनीयं महत्त्वमादधाति। एतैर्हेतुभिर्व्याकरणशास्त्रस्य मस्तकं विचारशास्त्ररूपेणात्यन्तमुच्चैः स्थितमभवत्।

२. न्यासः—भारतीयमस्तिष्कस्याश्चर्यजनकनिदर्शनेषु सर्वोत्तमं निदर्शनं न्यासविचारोऽस्ति। वैयाकरणाः परम्परागतशास्त्रार्थविचाररसिका भवन्ति। समये समये नूतना युक्तयो विचारिता भवन्ति स्म, याभिर्युक्तिभिर्वादिनो मूकीकरणे प्रयासः क्रियते स्म। अस्मिन्नेव न्यासविषये

---

१ वै० भू० सारः, धा० नि०। २. निरुक्तम् १।१। ३. म० भा० १।३।१।
४. श० र० का० २। ५. वा० प० १।१।

वादरत्न-न्यासरत्नमाला-पाणिनीयप्रदीपप्रभृतिग्रन्थानां रचनाऽभवत्। अत्र सूत्रेऽस्य पदस्य स्थापना यदि न क्रियते, तर्हि को दोषः स्यात् ? इत्येवमादिर्विचारो न्यासशास्त्रार्थस्य मूलमस्ति।

३. **परिष्कारशैली**—व्याकरणशास्त्रे परिष्कारशैली अद्भुतप्रभावोत्पादिका सम्मन्यते। यथा सम्मार्जनेन पात्रस्य मलमपाक्रियते, तथैव सूत्रेषु परिष्कारद्वारा सम्भावितदोषाणां निरासो भवति। अस्याः प्रभावः सर्वेषु शास्त्रेषु समाक्रान्तः। तत्र प्रथमं व्याकरणशास्त्र एवास्याः प्रभावो द्रष्टव्यः।

१. **अर्थवदधातुरप्रत्ययः प्रातिपदिकम्**—अस्मिन् सूत्रेऽर्थवत्पदस्यार्थो विचार्यते। यतश्च वाक्यार्थज्ञाने पदज्ञानं पदार्थज्ञानं च कारणं भवतीति नियमेनार्थवत्सूत्रस्य वाक्यार्थबोधस्तदैव स्यात्, यदा तत्र प्रत्येकं पदानामर्था ज्ञायेरन्। तत्रार्थवत्पदेऽस्ति भागद्वयम्। अर्थ इति प्रकृति-भागः, वत् इति प्रत्ययभागः। तत्रार्थशब्दः प्रयोजनपरो वृत्तिप्रतिपाद्यार्थपरो वा ? वदिति प्रत्ययांशे वतिप्रत्ययः मतुप्प्रत्ययो वा ? इत्येवमादिसंशयानां निराकरणस्यास्ति आवश्यकता। तदनु मिलितस्यार्थवत्पदस्यार्थः प्राचीनवैयाकरणानां मतेऽर्थवत्सूत्रे वृत्तिमत्स्वरूपः,[1] कृत्तद्धितेति सूत्रे एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धार्थकत्वरूपः क्रियते।

अत्र पक्षे पूर्वोत्तरसूत्रद्वयेऽर्थवत्पदस्य शक्तिद्वयकल्पना, शब्दाधिकारकल्पना। प्रत्यय-पर्युदासकल्पनाप्रभृतिगौरवमालोचयता श्रीनागेशभट्टेनोक्तसूत्रद्वये—'एतत्संज्ञाफलभूतविभक्तीतर-समभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपेणार्थवत्त्वं परिष्कृतम्।'[2]

अत्र पक्षे—लोकेऽर्थविषयकबोधजनकत्वम् इत्येतावदेवार्थवल्लक्षणमस्ति। अन्योंऽशः उपलक्षणम्, न तु अर्थवल्लक्षणे प्रविष्टमिति कृत्वा महल्लाघवमागतम्। अर्थवत्सूत्रे आधातुरिति पदस्योपादानमत्र प्रमाणतयोपन्यस्यते।[3]

२. **लः परस्मैपदम्**[4]—अत्र सूत्रे 'लः' इति षष्ठ्यन्तं पदमस्ति। अतः 'लकार-स्थानिकादेशाः परस्मैपदसंज्ञकाः स्युः' इति सूत्रार्थो भवति; परन्तु च्लिप्रत्ययस्य स्थाने जाय-मानस्य सिचोऽपि परस्मैपदसंज्ञाप्रसङ्ग आयातः। यतो हि च्लिप्रत्ययेऽपि चकारो लकार इकार इत्येवं त्रयो वर्णाः सन्ति। तत्स्थाने जातः सिच् लकारस्थानिकोऽपि सम्पन्नः। एतद्दोषवारणाय लकारमात्रस्थानिकादेशाः परस्मैपदसंज्ञका इत्यर्थः क्रियेत। तदा लटः स्थाने जायमानस्य शतृप्रत्ययस्य परस्मैपदसंज्ञा न स्यात्। अतश्च लकारात् प्राग्वर्णवृत्तिधर्मानवच्छिन्ना लत्वा-वच्छिन्ना च या स्थानिता तन्निरूपितादेशताश्रयः परस्मैपदसंज्ञक इत्येवं परिष्कृतेन सूत्रार्थे-नेष्टसिद्धिः कर्तुं शक्यते, नान्यथा, यदि यत्र 'लकारात्प्राग्वर्णो न स्यात्, तत्रैव लकारस्थानिकादेश इत्यादिरर्थः क्रियते, तावताऽपि च्ल्यादेशस्य व्यावृत्तिः, लडादेशस्य च संग्रहो भविष्यति। परन्तु तत्र पक्षे 'यत्र तत्र' इत्यादिनिवेशेनाननुगमदोष आयाति। अनुगतरूपेणैकः सूत्रार्थो न स्यात्। स्थलभेदेन भिन्नः स्यात्, अतः परिष्कार आवश्यकः।

---

१. प्री० म० अजन्तपुंलिङ्गे—अर्थवत्सूत्रे।
२. ल० श० शे० ,, ,, ।
३. ल० श० शे० अजन्तपुंलिङ्गे—अर्थवत्सूत्रे।
४. पा० सू० १।४।९९।

३. स्यतासी लृलुटोः[1]—अस्मिन् सूत्रे धातोरित्यनुवर्त्य 'धातोः परौ स्यतासी प्रत्ययौ भवेतां लृलुटोः परयोः' इत्यर्थः क्रियते। तत्र लुट्साहचर्येण लृशब्दो लकाररूपो गृह्यते। लकारस्य लृशब्दस्य 'लृट् लृङ्' इत्युभयरूपतया 'लृटि लृङि लुटि च परे धातोः परौ स्यतासी भवेताम्' इत्यर्थे क्रियमाणे यथासंख्यमित्यस्य प्रवृत्तिर्न स्यात्। अतो जातिगतं साम्यं गृहीत्वा 'लृत्ववति परे स्यत्वान् लुट्त्ववति परे तास्त्ववान् भवति' इत्यर्थः कर्तव्यो भवति। अयमेवार्थो नवीनपरिष्कारशैल्या लृत्वावच्छिन्ने परे स्यत्वावच्छिन्नो भवतु इति क्रमेणोच्यते। तत्र लृत्वम्—ऋकारेत्संज्ञके लकारे वर्तमानं गृह्यते, न तु लृतकादिशब्दघटके लृशब्दे वर्तमानं लृत्वम्, तत्र लुट्साहचर्याभावात्। एवञ्च ऋकारेत्संज्ञकत्वविशिष्टलत्वावच्छिन्ने परे स्यत्वावच्छिन्ना साधुर्भवतु, वैशिष्ट्यं च समानाधिकरण्यसम्बन्धेन इत्यादिरावश्यको विचारः क्रियते। यच्च परिष्कार-शैल्या एव महत्त्वम्।

४. हलन्त्यम्[2]—अस्मिन् सूत्रे 'उपदेशेऽजनुनासिक इत्[3]' इति पूर्वसूत्रादुपदेशे इदिति पदद्वयमनुवर्त्य 'उपदेशेऽन्त्यं हल् इत् स्यात्' इति सूत्रार्थः सम्पद्यते। अत्रोपदेशे इत्यधिकरण-सप्तम्याः क्रियाऽन्वयायोक्तं श्रीनागोजिभट्टेन[4] 'उपदेशे विद्यमानमन्त्यं हल्' इत्यादि। अत्र विद्य-मानत्वमुपलक्षणम्, न त्वन्त्ये हलि विशेषणम्। तथा सतीदानीं क्वापि इत्संज्ञा न स्यात्। पाणि-पादिकर्तृकोच्चारणस्य विनष्टतया तत्काले विद्यमानत्वस्याप्यभावेनेत्संज्ञाप्रवृत्तिकाले उद्देश्यस्यासिद्धत्वात्। उपलक्षणत्वे तु काकवन्तो देवदत्तस्य गृहा इतिवन्न दोषः। अन्यथा उपदेशे विद्यमानत्वविशिष्टान्त्यहल्त्वस्योद्देश्यतावच्छेदकधर्मस्य विशेषणाभावप्रयुक्तविशिष्टाभाव-विधयाऽभावात् साम्प्रतमित्संज्ञा कथं प्रवर्त्तेत ?

५. यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते[5]—अस्यां परिभाषायां यो यो यस्य यस्यागमो भवति, स स तद्गुणीभूतो भवतीति व्याप्तिर्ज्ञाता भवति। अस्यां च व्याप्तौ यत्-तत्पदयोर्निवेशे सकलागमानां ज्ञानं दुष्करमिति कृत्वा व्याप्तिज्ञानमपि दुःशकं भवि-ष्यति। अतः साध्याभावाधिकरणनिरूपितवृत्तित्वाभावरूपां व्याप्तिं[6] मत्वा तद्दोष-परिहारः कृतः।

यथा—'यत्र यत्र धूमस्तत्र तत्राग्निः' इत्यत्र सर्वेषां धूमानामग्नीनां च प्रत्यक्षत्वासम्भवेन व्याप्तेः प्रत्यक्षत्वं न सम्भवति, अतः साध्याभावाधिकरणनिरूपितवृत्तित्वाभावरूपा व्याप्तिः स्वीक्रियते। यथा घटस्य प्रत्यक्षे सामग्रीसत्त्वे घटाभावस्यापि प्रत्यक्षं स्वीक्रियत एव; तथैव तादृशवृत्तित्वस्य मीनशैवालादौ प्रत्यक्षे तदभावस्यापि धूमे प्रत्यक्षेण हेतुना व्याप्तिस्वरूपं प्रत्यक्षीक्रियते। अनया रीत्या व्याप्तिप्रत्यक्षत्वे चार्वाकोऽपि अनुमानस्य प्रामाण्यस्वीकारे बाध्यो भवति। प्रकृतेऽपि यदागमपरिभाषायां व्याप्तिज्ञानं सुकरमभवत्। अथवाऽऽगम-विशिष्ट आगमिग्रहणेन गृह्यते। इत्येवं वैशिष्ट्यमुद्रया परिभाषार्थस्यानुगमः कर्तुं शक्यः; अन्यथा अननुगमदोषो गले पतेत्। एषा लाघवगर्भा स्थितिः परिष्कारपद्धतेरेव महत्त्वम्।

---

१. पा० सू०—३।१।३३। २. पा० सू० १।३।३। ३. पा० सू० १।३।२।
४. ल० श० शे०—संज्ञाप्रकरणम्। ५. प० शे० १ तन्त्रे—यदागमपरिभाषा।
६. व्याप्तिपञ्चकम्।

**स्मृतिग्रन्थे परिष्कारप्रभावः**

स्मृतिग्रन्थेष्वपि परिष्कारस्य महान् प्रभावो दृश्यते। यथा—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते[1] ॥ इति।

अत्र श्लोके **पतौ** इत्यस्य साधुता श्रीभट्टोजिदीक्षितेनाचक्षाणणिजन्तात् कर्त्तरि 'अच इः' इत्युणादिसूत्रेण इ-प्रत्यये सति कृताऽस्ति[2]। अतो लाक्षणिकत्वात् 'पतिः समास एव' इत्यस्य प्रवृत्तिर्न जायते। श्रीनागेशभट्टेनासाधुरेवायं प्रयोगः स्वीकृतः। महर्षेस्तपोमाहात्म्येन तदुच्चारणे दोषाभावो दर्शितः[3]। अस्यां स्थितौ 'नैकस्यै बहवः पतयः, नैका विन्दते द्वौ पतो' इत्यादिश्रुतिविरोधाद् बहुस्मृतिविरोधाच्च। सप्तपदीतः पूर्वमिदं वचनं नेयम्। अर्थाद् विवाहकाले सप्तपदी यावन्न स्यात्, ततः पूर्वं वाग्दानात् परं यदि नष्टो मृतः प्रव्रजितो वा वरः स्यात्, तदाऽन्यः पतिः कर्तुं शक्यः, सप्तपदीतः परं तु मुख्यपतित्वमायाति, तदान्यस्य पत्युः स्वीकारे शास्त्रसम्मतिर्नास्ति। यदीदृशो विचारो न क्रियेत, तदा सामान्यतोऽर्थकरणेऽन्यस्य पत्युर्विधानं स्मृतित आयात्येव।

७. **'चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन'**[4], **'चतुर्थ्यामुदितं चन्द्रं न पश्येत्'**[5] इत्यादिवाक्यैर्जायमाने बोधे चतुर्थ्यामित्यस्यान्वयः क्व कार्यः? सन्निहितोपस्थितायामुदयनक्रियायाम्, आहोस्विद् निषेधप्रतियोगिन्यां दर्शनक्रियायाम्? तत्र प्रधानाप्रधानन्यायेन प्रधानस्य बलवत्त्वेन दर्शन एवान्वयः स्वीक्रियते। अतश्चतुर्थ्यां दर्शनं निषिद्धम्। उदयस्तृतीयायामपि भवेत्, किं वा चतुर्थ्या व्यपगमे पञ्चम्यां दर्शनं न निषिद्धमित्यपि द्रष्टव्यम्।

**धर्मशास्त्रे प्रभावः**

**'राहूपरागे स्नायायात्'** इति वाक्ये निमित्तत्वं सप्तम्यर्थं इति प्राचीनाचार्याः। अधिकरणसप्तमी—इति श्रीनागेशः[6]। अत्रोपपदविभक्तेः कारकविभक्तिर्बलीयसी[7] इति परिभाषया अधिकरणसप्तम्येवोचिता। राहूपरागपदस्य राहूपरागावच्छिन्नकाले लक्षणा कार्या। एवं चाधिकरणसप्तम्या स्नानकालस्य निर्णयो जातः। अन्यथा निमित्तार्थपक्षे राहूपरागोत्तरकालेऽपि स्नानं विहितं स्यात्। एवमेव विवाहे नान्दी मुखं कुर्यादि[8]त्यादिस्थलेऽप्यधिकरणसप्तमी सम्मता। विवाहपदस्य विवाहप्राक्काले लक्षणा च कृता। अशौचादिदोषनिवृत्त्यर्थं कतिपयदिवसेभ्यः प्रागेव नान्दीश्राद्धमाचरणीयमिति भावः। परिष्कारस्यैवैतत् फलम्।

---

१. पराशरस्मृतिः–३० मनोरमा–अजन्तपुंलिङ्गः।
२. प्रौ० म० अजन्तपु०–पतिः समास एव।
३. ल० श० शे०–अजन्त पु०।
४. निर्णयसागरः—चतुर्थी निर्णयः।
५. शिष्योक्तिः।
६. ल० श० शे० का० ७।
७. प० शे० ३ तन्त्रम्।
८. ल० श० शे० का० ७।

**निष्कर्षः**

अद्यत्वे खलूपालम्भो दीयते यदनया परिष्कारशैल्या संस्कृतव्याकरणमवच्छेदकावच्छिन्नादिशब्दैर्जटिलीकृतम् । परन्तु एतदुपालम्भदातारो भारतीयाः संस्कृतव्याकरणस्य शास्त्रार्थचर्चाया वा रसास्वादं न जानन्ति । इदं महते खेदाय विद्यते । साम्प्रतममेरिका-फ्रांस-जर्मन-रूस-प्रभृतिदेशेषु महता वेगेन नव्यन्यायस्य शैली सादरमभ्यस्यमाना दृश्यते । एतदप्यत्यन्तं खेदावहमस्ति यत् संस्कृतव्याकरणस्य विद्यार्थिनां शास्त्रार्थचिन्तायां प्रवृत्तिः प्रतिदिनं क्षीयमाणानुभूयते । यथा वर्गमूलादिनिष्कासने गणितादिविषयकोच्चतमविदुषां परिश्रमो निष्फलो न मन्यते, तथैव वैयाकरणानां एषा परिष्कारगर्भा शास्त्रार्थचर्चा निष्प्रयोजना नास्ति । अनया पद्धत्या बुद्धेः सहजो व्यायामो भवति । येनान्यान्यविषयेष्वपि तस्याः सारल्येन प्रवेशो भवति । भारतीयवैयाकरणानामद्यावधि समुपार्जिता संवर्द्धिता चैषा सम्पत्तिर्विनष्टा मा भूदिति तद्रक्षणाय सततं प्रयतितव्यम् । अस्ति चैषा ज्ञानसमृद्धिः ।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ॥



# धात्वाख्यातार्थविचारः

श्रीरामनन्दन-ओझाः
प्राचार्यचरः
रीवांस्थशासकीयसंस्कृतोपाधिमहाविद्यालयस्य (म० प्र०)

* * *

नमः पाणिनये तस्मै रामादधिककारिणे ।
येन सूत्रैस्समाबद्धो विस्तरः शब्दसागरः ॥

इदं नाविदितं सर्वेषां यत्सर्वासां भारतीयभाषाणां जननी संस्कृतभाषेति । यस्या महान् शब्दविस्तारः । यस्यां विपुलसाहित्यम् । लौकिकवैदिकरूपेण च भाषेयं द्वैविध्यमादधाति । इयं च न केवलं समृद्धा, अपि तु सर्वाङ्गपूर्णाऽपि । यस्या विद्वन्मूर्धन्यैः पूर्णव्याकरणरचनया गौरवपताका दोधूयते । व्याकरणं भाषाया आत्मभूतम् । यद्यपि संस्कृतभाषाया व्याकरणमिन्द्राद्यनेकप्राचीनवैयाकरणैरुपनिबद्धम्, तथापि लौकिकवैदिकरूपेण सर्वाङ्गपूर्णं व्याकरणं महर्षिपाणिनेरेवेति सर्वविदितं सर्वसम्मतञ्च । अत एव शाब्दिकवरेण्यैः श्रीनागेशभट्टैरस्यैव व्याकरणस्य वेदाङ्गत्वम्, नान्येषामित्युद्घुष्टम् । आधुनिकसंस्कृतसमाजेऽपि पाणिनिव्याकरणस्यैव प्रचारः प्रसारः समादरोऽपि वर्तते । अन्यैरुपनिबद्धं व्याकरणं लुप्तप्रायमेवेति । तच्च व्याकरणं महर्षिकात्यायनस्य वार्तिकसमूहेन महर्षिपतञ्जलेश्च महाभाष्येण गौरवान्वितं कृतं वर्तते ।

पाणिनिव्याकरणमेवाधारीकृत्य प्राचीननवीनवैयाकरणैरपि परमताक्षेपप्रत्याक्षेपनिराकरणपूर्वकं बहवो ग्रन्था रचिताः, तेष्वेव श्रीभट्टोजिदीक्षितादिविरचितकारिकाव्याख्यानभूतस्य, श्रीकौण्डभट्टविरचितस्य वैयाकरणभूषणसारस्य, श्रीनागेशभट्टविरचितस्य वैयाकरणलघुसिद्धान्तमञ्जूषायाश्च सिद्धान्तमाश्रित्य धातोराख्यातस्यार्थविमर्शात्मको लघुनिबन्धोऽयमायासितः । तत्रानयोः शब्दयोर्वैदिककालादारभ्याद्यावधिपर्यन्तं प्रयोगस्थलं समीक्ष्यमाणोऽहमायासितेऽस्मिन् निबन्ध ऐतिहासिकं किमपि लिखितुकामः पूर्वं धातुशब्दस्यैतिहासिकं विवेचनं प्रस्तुतीकरोमि । अयञ्च धातुशब्दो "भूवादयो धातवः"[1] इति सूत्रे महर्षिपाणिनिनाऽष्टाध्याय्यां संज्ञारूपेण स्वीकृतोऽस्ति । पाणिनिव्याकरणे संज्ञानां भेदद्वयं दृश्यते । प्रथममन्वर्थरूपं द्वितीयं कार्यनिर्वाहकरूपञ्च । अन्वर्थास्संज्ञास्संज्ञिनां समूलमर्थमनुगच्छन्ति, यथा—अनुनासिक-संयोग-प्रातिपदिकादयः । कार्यनिर्वाहकसंज्ञाश्च केवलं कार्यमेव निर्वहन्ति, यथा—टि-घु-भ-घेत्यादयः । आसामेव संज्ञानां महासंज्ञालघुसंज्ञारूपेणापि व्यवहारो दृश्यते । महासंज्ञाकरणमेवान्वर्थसंज्ञात्वं सूचयतीति शब्दकौस्तुभे 'महासंज्ञाकरणमन्वर्थलाभार्थम्' इति प्रथमानिर्दिष्टं समास उपसर्जनमिति सूत्रव्याख्यावसरे श्रीभट्टोजिदीक्षितैः स्वीकृतम् । यद्यपि सम्प्रदानसंज्ञाव्याख्याने 'रजकाय वस्त्रं ददाति, खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इति प्रयोगमनुसृत्य 'नान्वर्थतायामाग्रहः' इति

---

१. अष्टाध्यायी—१।३।२ ।

महाभाष्यकारस्य, शब्दकौस्तुभे च "अर्थवत्[1]" सूत्रव्याख्यावसरे "महासंज्ञाकरणं प्राचामनुरोधेन" इति भट्टोजिदीक्षितस्यापि वचनेन न सर्वत्रान्वर्थलाभ इति प्रतीयते बहुशो दृश्यते च।

आख्यातशब्दश्च न पाणिनेः संज्ञा, किन्तु महर्षिणा 'मयूरव्यंसकादयश्च' इत्यत्र 'आख्यातमाख्यातेन क्रिया सातत्ये' इति गणसूत्रं पठता अङ्गीकृतः। मन्ये, इयं संज्ञा प्राचां वैयाकरणानामेव। यतो बहुशः प्राचीनसंज्ञानामप्येतस्मिन् पाणिनीयाष्टके व्यवहारो दृश्यते। यथा—प्रथमादयः प्राचां संज्ञास्ताभिरिहापि व्यवहारः। आङिति टासंज्ञा प्राचामिति वैयाकरणसिद्धान्तकौमुद्यां यत्र तत्रापि श्रीभट्टोजिदीक्षितेनोच्यते।

अथेदानीं धात्वाख्यातशब्दयोः पृथक् पृथक् प्राचीनग्रन्थेषु प्रयोगमनुसृत्य विमर्शः प्रारभ्यते। अनयोः शब्दयोः सर्वप्रथमं संस्कृतवाङ्मयस्य कस्मिन् ग्रन्थे कस्मिन्नर्थे प्रयोगो विद्यत इत्यालोच्यते। सर्वप्रथमं ऋग्वेदे धातुशब्द एवं पठितः—

एवा महस्तुविजातस्तुविष्माग्बृहस्पतिर्वृषभो धायि देवः।
स नः स्तुतो वीरवद्धातु गोमत्[2]........................॥

इत्यष्टममन्त्रे धातुशब्दस्य करोत्यर्थे प्रयोगो वर्तते। इदं सायणाचार्यस्य मतम्। किन्तु ऋग्वेदस्यैव पञ्चममण्डलस्य चतुश्चत्वारिंशत्तमे सूक्ते—'अन्त्यं हविः सचते सच्च धातु चारिष्टगातुः स होता सहोभरिः' इत्यादि तृतीये मन्त्रे धातुशब्दस्य नपुंसकलिङ्गे प्रथमान्तः प्रयोगो दृश्यते। अस्यार्थोऽपि सायणाचार्येण "धातुः=धारकम्" इति भाष्यं कुर्वता धारणकर्तृत्वमेव निश्चीयते।

ऋग्वेदस्यैव दशममण्डलीयैकादशसूक्ते, षट्पञ्चाशत् सूक्ते च "रपद्गन्धर्वीरप्या··· अदितिर्नि धातु" इत्यादौ, 'तनूष्टे वाजिन् तन्वं नयन्ती वाममस्मभ्यं धातु शर्म तुभ्यम्···' इत्यादिमन्त्रेषु प्रयुक्तो धातुशब्दः सायणाचार्यस्य मते स्थापनार्थे स्वीकृतोऽभूत्।

प्रायोऽन्येऽपि वेदभाष्यकर्तारोऽस्मिन्नेवार्थे सहमतिं प्रकटितवन्तः। अनया पर्यालोचनया धातुशब्दस्य केवलमेकस्मिन् स्थाने कर्तृकारके धारकत्वशक्तिप्रधाने प्रयोगोऽस्तीति लभ्यते। अन्यत्र मण्डले मन्त्रे तु क्रियापरकत्वमेव धातुशब्दस्य प्रयोगो दृश्यते। किन्तु क्रियापरकत्वेऽपि सर्वत्र प्रकृतिः 'धा' एव। अतः समन्वयात्मकदृष्ट्या धारकत्वम्, कर्तृत्वम्, स्थापनकर्तृत्वं वा प्रायः समानमिति न तत्र कश्चिद्विशेषभेदो वर्तते।

इदानीमृग्वेदानन्तरं संस्कृतवाङ्मये कस्मिन्नर्थे केन रूपेण धातुशब्दो गृहीतोऽभूदित्युत्तरोत्तरं महर्षिपाणिनिकालपर्यन्तं धातुशब्दस्य प्रवाहे कुत्र कुत्र भिन्नार्थत्वम्, समानार्थकत्वं वेति ? यदि भिन्नार्थकत्वम्, तर्हि युक्त्या समन्वयो भवेन्न वेति विचार्यते। ऋग्वेदस्य पञ्चममण्डलीयो धातुशब्दो धारणार्थप्रधानो ब्रह्मपरक इति। अतो ब्रह्मकारकमपि, स्थापकमपि, धारकमपि भवतीति दृष्ट्या ऋग्वेदीयप्रयोगाणां परस्परं समन्वयो भवितुमर्हति। काण्वसंहितायामपि—

---

१. अष्टाध्यायी—१।२।४५। २. ऋसं० १।१९०।८।

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु[1] ॥

अस्मिन् मन्त्रे चोपात्ताया 'दधातु' इति क्रियायाः काश्यपक्षितीशचन्द्रमहोदयेन 'प्रसादीकरोतु' इत्यर्थो वर्णितः, किन्तु तत्रापि धारणार्थिकैव सा क्रियेति निष्कर्षः । अतो न तत्रापि किञ्चिद्वैमत्यमिति मन्ये ।

तदनन्तरं प्रवाहितो धातुशब्दोऽथर्ववेदसंहिताया अष्टादशमे काण्डे प्रथमसूक्ते एकोनविंशतितमे मन्त्रे, तथा विंशतितमे काण्डे द्वादशे सूक्ते षष्ठमन्त्रे च क्रमशः 'इष्टस्य मध्ये अदितिर्निधातु नो भ्राता....', 'स न स्तुतो वीरवद्धातु गोमत्.....' इत्यादीत्यत्र नपुंसकलिङ्गे प्रयुक्तो दृश्यते । किन्त्वस्या एव संहिताया द्वितीयकाण्डे षट्त्रिंशत्तमे सूक्ते द्वितीयमन्त्रे स एव धातुशब्दो लिङ्गं परिवर्त्य पुँल्लिङ्गे प्रावर्तत । तद् यथा—

सोमजुष्टं ब्रह्मजुष्टमर्यम्णा सम्भृतं भगम् ।
धातुर्देवस्य सत्येन कृणोमि पतिवेदनम् ॥ इति ।

आधुनिकैर्विद्वद्भिरानुमानिकसाक्ष्यमपेक्ष्याथर्वसंहितायाः काल ऋक्संहिताकालाद् द्विसहस्रवर्षेभ्यः पश्चान्मन्यते । अतः प्रतिभाति यद्धारणार्थकधातुशब्दः पूर्वं नपुंसकलिङ्गे प्रवृत्तः, पश्चाद् गतिप्रवाहादथर्वसंहिताकाले लिङ्गपरिवर्तनं कृत्वा पुँल्लिङ्गे प्रयुक्तः, किन्तु लिङ्गपरिवर्तनेऽपि प्रवृत्तिनिमित्तं समानमेवेति नार्थपरिवर्तनं जातम् । तदनन्तरमुपनिषत्सु ब्राह्मणग्रन्थेषु चानेकस्थानेषु धातुशब्दस्य लिङ्गद्वये प्रयोगो दृश्यते, अर्थे च न भिन्नता । तद् यथा गोपथब्राह्मणस्य पूर्वभागस्य सप्तविंशतितमे पाठे—'धात्वर्थवचनं शैक्ष्यम्' इति लिखितमस्ति । तदतिरिक्तमपि शतपथब्राह्मणे, वाजसनेयब्राह्मणे, जाबालोपनिषदि, छान्दोग्योपनिषदि, नारदपरिव्राजकोपनिषदि, याज्ञवल्क्योपनिषदि, वाराहोपनिषदि, प्रणवोपनिषदि चानेकग्रन्थेषु बहुवारं धातुशब्दः प्रायुज्यत । महाभारते पुराणेषु चायुर्वेदे दर्शनशास्त्रे च समानार्थं एवास्य प्रयोगो दृश्यते । भविष्यत्पुराणेऽपि महर्षिपाणिनेर्धातुपाठस्यापि चर्चामात्रं वर्तते । तद्यथा—

इत्युक्त्वाऽन्तर्दधे रुद्रः पाणिनिः स्वगृहं ययौ ।
सूत्रपाठं धातुपाठं गणपाठं तथैव च ॥
लिङ्गसूत्रं तथा कृत्वा परं निर्वाणमाप्तवान् ॥ इति ।

अथेदानीं लौकिकवाङ्मये कोषादीनाधारीकृत्य धातुशब्दस्य प्रयोगो विचार्यते । कोषकारेषु प्राचीनकोषकारस्यामरसिंहस्य कृतिविशेषेऽमरकोषे नानार्थवर्गे—

श्लेष्मादिरसरक्तादि महाभूतानि तद्गुणाः ।
इन्द्रियाण्यश्मविकृतिः शब्दयोनिषु धातवः[2] ॥

इत्ययं श्लोको लभ्यते । अत्र 'शब्दयोनिषु' इत्युक्त्या 'सर्वं नामधातुजमाह' इति फलितम् । अन्येऽपि कोषकारा धातुशब्दस्य निम्नप्रकारेण वाच्यमाहुः —

---

१. शुक्लयजुर्वेदकाण्वसंहिता—२७।२३ । २. अमरकोषः–३।३।६५ ।

धातुर्नेन्द्रियेषु च··· ··· ··· ··· ··· ··· ··· ।
शब्दयोनिमहाभूत　तद्गुणेषु　रसादिषु ।
मनःशिलादौ श्लेष्मादौ विशेषाद् गैरिकेऽस्थ्नि च[1] ॥

शब्दार्थचिन्तामणावपि धातुशब्दोऽयं पुंल्लिङ्गे नियम्यतेऽधोऽङ्कितेष्वर्थेषु—

क्रियावाचित्वमाख्यातुं　प्रसिद्धोऽर्थः　प्रदर्शितः ।
प्रयोगतोऽन्ये मन्तव्या　अनेकार्था हि धातवः ॥[2]
आकाशादिमहाभूतेषु　शब्दाकाशादिगुणेषु रसादिषु ।
रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि　धातवः ॥ इति ।
गैरिकमनःशिलाद्यश्मकविकारे　श्लेष्मादाविति ।
ते　धातवोऽपि　विद्वद्भिर्गविता　देहधारणात् ॥

इत्यादिकोषसाक्ष्येण धारकत्वशक्तिप्रधान एव धातुशब्द इति सिद्ध्यति । यतः कोषकारैर्येष्वर्थेषु धातुशब्दः प्रयुक्तस्ते सर्वे धारणकर्तृत्वपरा एव पदार्था इति ।

दार्शनिकसम्प्रदाये पृथिव्यादिषु धातुशब्दस्य प्रयोगो दृश्यते, विशेषतो बौद्धदर्शने 'इदं प्रत्ययफलम्' इति सूत्रप्रसङ्गे सम्यग् वर्णितोऽस्ति ।

आयुर्वेदे रसेश्वरदर्शनेऽपि धातुशब्दः सुवर्णपारदाभ्रकादिषु पुंल्लिङ्गे प्रयुक्तः— 'जीवनधारकत्वेन सर्वोत्कृष्टो द्रव्यविशेषः' इत्यनेन शुक्रार्थे धातुशब्दस्य प्रयोगोऽभिलक्ष्यते । स च 'मज्जाशुक्राणि धातवः' इति कोषेण समर्थितो भवति ।

अन्यच्च—

विसर्गदानविक्षेपैः　सोमसूर्यानिला　यथा ।
धारयन्ति　जगद्देहं　कफपित्तानिलास्तथा ॥
सुवर्णरूप्यताम्राणि　हरितालं　मनःशिलाः ।
गैरिकाञ्जनकासीससीसलोहाः　सहिङ्गुलाः ॥
गन्धकोऽभ्रकमित्याद्या धातवो　गिरिसम्भवाः ॥

इत्यादिसुश्रुतवचनानुशीलनेन प्रतिभाति यद्धारकत्वशक्तिप्रधानस्यैव धातुशब्दस्य सर्वत्र प्रयोगः प्रचलितः ।

वलीपलितखालित्यकार्श्यावल्यजराभयान्　।
निवार्य देहं　दधति　नृणां　तद्धातवो　मताः ॥
शरीरदूषणाद्दोषा　मलिनीकरणान्मलाः ।
धारणाद्धातवस्ते　स्युर्वातपित्तकफास्त्रयः ॥
हेमताराररनागाश्च　ताम्ररंगे　च　तीक्ष्णकम् ।
कांस्यकं कान्तलौहश्च　धातवो　नव कीर्तिताः ॥
हिरण्यं　रजतं　कांस्यं　ताम्रं　सीसकमेव च ।
रङ्गमायसरौप्यं　च　धातवोऽष्टौ　प्रकीर्तिताः ॥

---

१. मेदिनीकोषः–शब्दवर्गः ।　　२. भरतमल्लिककृतोपसर्गवृत्तिः–१।५ ।

इत्यादिश्लोका अपि धारकत्वप्रधानस्य धातुशब्दस्य प्रयोगे प्रमाणीभूताः।

अथेदानीं धातुशब्दस्य प्राचीनसंस्कृतवाङ्मये प्रयोगसाक्ष्यद्वारैतिहासिकं किञ्चिदाख्याय प्रसङ्गादाख्यातशब्दस्यैतिहासिकं विवेचनं प्रस्तूयते। मम दृष्ट्याऽऽख्यातशब्दस्य ऋग्वेदे न कुत्रापि प्रयोगो दृश्यते, किन्तु यजुःप्रातिशाख्ये 'भारद्वाजकमाख्यातम्'[1] इति सूत्रं वदता कात्यायनमहर्षिणाऽऽख्यातशब्दः क्रियार्थे संगृहीतो वर्तते। अनेन ज्ञायते यदस्य शब्दस्य सर्वप्रथमः समादर ऋषिभारद्वाजेनैव कृतः। पर्यालोचनया तिङन्तार्थशक्तिप्रधान एवाख्यातशब्दः प्रतिभाति। महर्षिभारद्वाजः प्राचीनवैयाकरणेष्वेकः, तेन चाख्यातशब्दः संज्ञारूपेण स्वीकृतोऽभूदिति सम्भाव्यते। अयञ्च निर्विवादविषयो यदस्य शब्दस्य तिङन्तार्थ एव प्राचीनवाङ्मये प्रयोगः प्रचलितः। तदनन्तरं ह्यस्य शब्दस्य कथोपकथनार्थेऽप्युपनिषद्वाङ्मयमारभ्याद्यतनवाङ्मयपर्यन्तम्—'आख्यातं कथितम्, आख्यातं वर्णितम्' इत्यादिरूपेण प्रयोगोऽभूत्। कोषकारैस्तु तिङन्तार्थ एव प्रयोगः स्वीकृतः, किन्तु मेदिनीकोषे तिङर्थेऽयं प्रयुक्तः। तद्यथा—'आख्यातं भाषिते तिङि' इति।

तदेवं प्रवाहितस्याख्यातशब्दस्य महावैयाकरणेन निरुक्तकारेण यास्काचार्येण धातौ तिङन्ते च प्रयोगः प्रारब्धः। यथा—'एतानि चत्वारि पदजातानि। नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति।'[2] अत्र सुबन्ततिङन्तमुपसर्गो निपातश्चेति चतस्रः पदजातयः स्वीकृताः। तत्र चाख्यातशब्दस्तिङन्तार्थ एवाभिलक्ष्यते। किन्त्वग्रे यास्केनैव निरुक्तस्य प्रथमाध्यायस्य चतुर्थपादे त्रयोदशखण्डे 'तत्र नामान्याख्यातजानि न सर्वाणीति गार्ग्यः। वैयाकरणानां चैके' इत्यत्राख्यातशब्दो धात्वर्थे प्रयुज्यते स्म।'सर्वं नाम धातुजमाह शकटस्य च तोकम्'[3] इति महर्षिपतञ्जलेरुद्धरणेनास्य तुल्यता।

अतो निश्चितं यदयमाख्यातशब्दस्तदाप्रभृत्येव धातुपर्यायवाची बभूव; किन्तु सार्धं तिङर्थतिङन्तार्थयोरपि प्रवाहो नावरुद्धः। मीमांसादिदर्शनेष्वप्याख्यातशब्दस्य क्वचित्तिङि, क्वचित्तिङन्ते क्वचिच्च धातौ प्रयोगः प्रचलितः। अत एव बह्वर्थवाचकतां परिज्ञाय नाख्यातशब्दः संज्ञात्वेन संगृहीतः पाणिनिना; किन्तु प्राचीनवाङ्मयादारभ्याद्यावध्येकस्मिन्नेवार्थे प्रवाहरूपेण प्राप्तो धातुशब्दः संज्ञात्वेन समादृतोऽष्टाध्याय्यामिति। अभिलक्ष्यते यत् सम्यगर्थपर्यालोचनानन्तरमेवान्वर्थसंज्ञारूपेणेयं धातुसंज्ञा क्रियावाचकतामापद्य पाणिनिव्याकरणे प्रतिष्ठिता। ऋग्वेदसंहितायां नपुंसकलिङ्गे प्रयुक्तोऽपि पश्चात् पुंल्लिङ्गमेवास्य प्रवृत्तिनिमित्तमित्यभिमन्यते।

इदानीं कस्मिन् व्याकरणे केन वैयाकरणेन धात्वाख्यातशब्दौ संज्ञारूपेण गृहीताविति विचार्यते। ऋग्वेदस्य प्राचीनं व्याकरणशास्त्रमृक्प्रातिशाख्यं नाम। तत्र शौनकमहर्षिणा द्वितीयभागे द्वादशमे पटले 'तदाख्यातं येन भावं स धातुः' इत्येकोनविंशतितमे सूत्रे धात्वाख्यातशब्दयोरुल्लेखः कृतः। सूत्रार्थपर्यालोचनेन ज्ञायते यद्भाववाचकतायां धातुः स एव यदा प्रत्ययसन्नियुक्तोऽसत्त्वभूतभावमाख्याति, तदाख्यातमिति। प्रकृतिप्रत्ययविकरणादिविशिष्टं तिङन्तमेवा-

---

१. वाजसनेयिप्रातिशाख्यम्—८।५१। २. निरुक्तम्—१३।९। ३. तदेव।

ख्यातम्, प्रत्ययविकरणादिरहिता प्रकृतिरेव धातुरिति लभ्यते । तदनन्तरं यजुर्वेदस्य व्याकरणे यजुःप्रातिशाख्ये पञ्चमाध्यायस्य—'धात्वर्थे यकारे स्वरपूर्वे' इति दशमसूत्रे संज्ञापरकस्यैव धातुशब्दस्य क्रियायाम् 'प्रकृताख्यातमाख्यातपूर्वम्', 'कृताख्यातयोश्चोदात्तयोः' इत्याद्यनेकसूत्रेषु तिङन्तार्थे ह्याख्यातशब्दस्य प्रयोग उपलभ्यते । ऋक्तन्त्रव्याकरणे सामप्रातिशाख्ये शाकटायन-महर्षिणापि पञ्चमप्रपाठकस्य द्वितीयदशके—'उपसर्गस्य धातावेकाक्षरे नामभूते' इति षष्ठसूत्रे क्रियावाचकत्वमेव धातुशब्दस्यार्थः सुरक्षितः । अनेन वेदत्रय्याः प्रातिशाख्यकालादेव धात्वाख्यात-शब्दयोः प्रयोगः संज्ञारूपेण प्रचलितः, किन्तु तत्पश्चादर्वाचीनवैयाकरणैर्मीमांसकादिदार्शनिकैश्चा-ख्यातशब्दो धात्वर्थे, तिङर्थे, तिङन्तार्थे च नियन्त्रितः । एतत्सर्वमालोच्यैव व्याकरणसम्प्रदायेऽ-बाधगत्या प्रवाहितः क्रियावाचकतामापन्नो धातुशब्दो महर्षिपाणिनिना 'भूवादयो धातवः' इति सूत्रे संज्ञात्वेन स्वीकृतः । आख्यातशब्दश्च व्यंसकादिगणे तिङन्तार्थ एव प्रयुक्तः, न तु संज्ञारूपेण ।

अत्र पाणिनिव्याकरणे संज्ञारूपेण गृहीतस्य धातुशब्दस्याथ चान्यतः सङ्गृहीतस्याख्यात-शब्दस्यापि व्युत्पत्तिः क्रियते । धारणपोषणार्थकाद् डुधाञ् इत्यस्मात्—'सितनिगमिमसिसच्य-विधाञ्क्रुशिभ्यस्तुन्'[1] इत्युणादिसूत्रेण कर्तरि तुन्प्रत्यये कृते निष्पन्नोऽयं धातुशब्दो दधातीति विग्रहं लभते ।

आख्यातशब्दश्चाङ्पूर्वकाच्चक्षिङ्व्यक्तायां वाचीत्यस्मात् कर्तरि क्तप्रत्यते आख्यातीति आख्यातमिति व्युत्पत्त्या निष्पन्नो भवति ।

'भूवादयो धातवः' इति व्याख्यावसरे पातञ्जलमहाभाष्यपर्यालोचनयाऽपि धातोः क्रिया-वाचकत्वमेवायाति । तद्यथा महाभाष्ये—यदि पुनः क्रियावचनो धातुः, इत्येतल्लक्षणं क्रियते ? का पुनः क्रिया ? ईहा । कापुनरीहा ? चेष्टा । का पुनश्चेष्टा ? व्यापार इत्युक्तम्' । अन्यच्च—'अथ यद्येव क्रियावचनो धातुः इत्येष पक्षोऽथापि भाववचनो धातुरिति,-किं गतमेतदियता सूत्रेण ? आहोस्विदन्यतरस्मिन् पक्षे भूयः सूत्रं कर्त्तव्यम् ? गतमित्याह । कथम् ? अयमादिशब्दोऽस्त्येव व्यवस्थायां वर्तते, तद् यथा देवदत्तादीन् समुपविष्टानाह—देवदत्तादय आनीयन्तामिति । त उत्थाप्यानीयन्ते । अस्ति प्रकारे वर्तते, तद्यथा-देवदत्तादय आढ्या अभिरूपा दर्शनीयाः पक्षवन्तः । देवदत्तप्रकारा इति गम्यते' इत्यादिमहाभाष्येण धातोः क्रियावाचित्वं समर्थितं भवति । एतत्सर्वं निधायैव शब्दकौस्तुभे—'दधतिक्रियामिति धातवः' इति भट्टोजिदीक्षितादयः स्वीकृतवन्तः । तथा चेयं कारिका—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्[2] ।। इति ।

अयं भावः—फलव्यापारयोरित्यत्र वाचकत्वं सप्तम्यर्थः, फलस्य निरूपितत्वसम्बन्धेन विभक्त्यर्थेऽन्वयः । वाचकत्वस्य च स्वरूपसम्बन्धेन धातावन्वयः । एवञ्च फलनिरूपितवाचक-तावान् धातुरिति फलितम् । एकवृन्तफलद्वयन्यायेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक्शक्तिः, अर्थात् फलानुकूलो व्यापार एव धात्वर्थः । फलत्वञ्च तद्धात्वर्थजन्यत्वे सति कर्तृ-

---

१. उणादिसूत्रम्—सू० सं० ४२६८ ।　　२. वै० भूषणम् ।

प्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम् । पचति—पाकः, करोति—कृतिरित्यादौ धात्वर्थज्ञानाविशेषेऽपि क्रियान्तराकाङ्क्षाऽनाकाङ्क्षयोर्दर्शनेन व्यापारो भावनापरनामधेयः, साध्यत्वेनाभिधीयमानक्रियारूप एव । अत एव —

**यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।**
**आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ।।**[१]

इति वाक्यपदीयेऽपि स्पष्टीकृतम् । तथा च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपं साध्यत्वम् । तद्रूपवत्त्वमेवासत्त्वभूतत्वमिति **'असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते'** इति वाक्यपदीयकारेणोक्तम् ।

**'फले प्रधानं व्यापारः'** इत्युक्त्या व्यापारमुख्यविशेष्यकः शाब्दबोधः । अत एवापि—**'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि'**[२] इति निरुक्तमनुकूलम् । पदान्तरासमभिव्याहारे प्रतीतस्यैव व्यापारत्वाद् घटं करोतीत्यादौ घटस्यापि साध्यत्वेन प्रतीतावपि नातिव्याप्तिः । पचतीत्यादौ फूत्कारत्वादिप्रकारस्यानुभवसिद्धत्वेन व्यापारस्य **'फूत्कारत्वाधःसन्तापनत्वादि'** तत्तद्रूपेणैव वाच्यता । अननुगतनानाधर्मावच्छिन्नशक्यतानिरूपितैकधर्मवत्त्वरूपस्य नानार्थत्वेन तु तदादिन्यायेन बुद्धिविशेषस्यानुगमकत्वान्न नानार्थतापत्तिः । आख्याते क्रियैकत्वव्यवस्थाऽप्यवच्छेदकबुद्धिविशेषैक्यमादायैव निर्वहणीया ।

अत्र—

**गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।**
**बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते**[३] **।।**

इति वाक्यपदीयकारोऽप्यनुकूलः ।

**मञ्जूषाकारास्तु**—'फले व्यापारे च पृथक् शक्तिस्वीकारे उद्देश्यविधेयभावेनान्वयप्रयोजिकायाः पृथगुपस्थितेर्दर्शनेन व्यापारोद्देश्यकफलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य च बोधापत्तिः स्यात् । एकपदे व्युत्पत्तिद्वयकल्पनम्, धातोश्चार्थद्वये शक्तिद्वयकल्पनम्, कार्यकारणभावद्वयकल्पनञ्चेत्यादि महद्गौरवम् । अतः फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च धातूनां शक्तिरेकैव । व्यापारविशेष्यकबोधे कर्तृप्रत्ययसमभिव्याहारे, फलविशेष्यकबोधे कर्मप्रत्ययसमभिव्याहारे चोपस्थितिद्वये द्विविधहेतुत्वस्य प्रामाणिकगौरवस्वीकारेणादोष इति स्वीकुर्वन्ति ।

**मीमांसकास्तु**—अनेकधातूनां शक्तिकल्पनागौरवम्, प्रत्ययानां शक्तिकल्पने लाघवञ्चाभिलक्ष्य विक्लित्यादिफलमेव धात्वर्थः, व्यापारस्तु तिङर्थ एवेति स्वीकुर्वन्ति, किन्तु एतन्मते व्यापारस्य धात्वर्थत्वाभावेन क्रियावाचकताभावाद्धातुसंज्ञाऽनापत्तिः । कृतामपि कर्तृकर्मादिवाचकताऽनापत्तिश्च । **'कर्तरि कृत्'**[४], **'लः कर्मणि च भावे'**[५] इत्यनयोः परस्परं विरोधापत्तिः ।

---

१. वाक्यपदीयम्—३।८।१; २. शु० य० उव्वटकृते संहिताभाष्ये–१।१ ।
३. वा० प० ३।८।४; ४. अष्टाध्यायी–३।४।६७; ५. तदेव—३।४।६९ ।

फूत्कारादिव्यापारस्य प्रत्ययार्थत्वे गच्छतीत्यादौ तद्भानवारणाय बोधे पचि समभिव्याहारस्यापि कारणत्वकल्पनेऽतिगौरवम्, सकर्मकादिव्यवस्थोच्छेदापत्तिश्च। व्यापारस्याक्षेपेण प्रतीतिसम्भवेऽपि तत्प्राधान्यानुपपत्तिः। पचतीत्यत्र पाकं करोतीति भावनाया विवरणदर्शनेऽपि पाकानुकूलव्यापारवतः कर्तृविवरणस्यापि दर्शनेनाविशेष एव।

न च पाकं करोतीत्यशब्दार्थविवरणवदितरेतरयोगद्वन्द्वे समुच्चयांशविवरणवद्वा कर्तृविवरणं तात्पर्यार्थविवरणमिति वाच्यम्, भावनाया अपि तुल्यत्वात्। तत्र कथमपि तात्पर्यार्थविवरणं वक्तुमशक्यत्वात्। **'पक्ता देवदत्तः'** इत्यत्राभेदान्वयस्यानुभवसिद्धत्वेन **'पचति देवदत्तः'**[1] इत्यत्राप्यभेदान्वयदर्शनेन कर्तुर्वाच्यत्वमावश्यकम्। अभेदान्वये समानविभक्तिकत्वस्य नियामकत्वे तु **'सोमेन यजेत्'** इत्यादावप्यभेदबोधानापत्तिः। लक्षणया कर्तुरुक्तत्वे तु पिङ्गाक्ष्यादियौगिकानां द्रव्यावाचित्वेऽरुणाधिकरणोच्छेदापत्तिरिति।

**प्राभाकरादयस्तु—'फलमेव धात्वर्थः पुरुषवृत्तिभावना चाख्यातार्थः, तिङर्थवर्तमानत्वादिकं तु भावनायामेवान्वेति'** इति वदन्ति।

**नैयायिकानां मते**—फलव्यापारौ धात्वर्थ इत्यत्र न कश्चिद्विरोधः, किन्तु 'लकाराणां कृतावेव शक्तिः, न तु कर्तरि' इत्यवधेयम्। यद्यपि नैयायिकानां व्यापारो धात्वर्थः, तथापि न स भावनाव्यवहार्यः[2] इति।

**शाब्दिकैस्तु**—पचति—पाकमुत्पादयति, पाकानुकूला भावना, पाकानुकूलोत्पादनेति विवरणदर्शनाद्विध्रियमाणस्यापि तद्वाचकत्वमावश्यकमिति व्यापारो भावनोत्पादनाक्रियेत्यादयः समानार्थका एवेति मन्यते। अन्यच्च 'भावनाया धात्वर्थत्वाभावे घटं भावयतीत्यत्रेव घटो भवतीत्यत्रापि द्वितीयापत्तिः। अननुगतकर्तृत्वस्य दुर्वचत्वेन घटस्याकर्तृत्वाद् बाध्यबाधकभावो न स्यात्। घटादौ कृत्याश्रयत्वम्, कारकचक्रप्रयोक्तृत्वमपि नास्ति। धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वम्। अपि च भावनाया वाच्यत्वं विना सकर्मकत्वाकर्मकत्वविभागस्योच्छेदापत्तिश्च। किञ्च धातूनां फलवाचकत्वमप्यावश्यकम्, क्रियावाचकत्वाविशेषेण त्यजिगम्योरपि समानार्थकत्वापत्तिः। उपलक्षणत्वे त्वेकस्या एव क्रियायाः पूर्वदेशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषस्तदवस्थ एव। तदेवं धात्वर्थफलजनकत्वे सति व्यापारवाचकत्वं धात्वर्थ इति निष्कर्षो वैयाकरणानाम्।

**आख्यातशब्दस्य च वैयाकरणभूषणसारे**—नन्वनयोराख्यातार्थत्वे किं मानमिति पङ्क्तौ तिङ्यपि प्रयोगो दृश्यते, किन्त्विदं नैयायिकमीमांसकादिमतानुसारम्, मेदिनीकोषसम्मतञ्चेति ऐतिहासिकवर्णने स्पष्टीकृतं वर्तते। तदेवं धात्वाख्यातशब्दयोः प्रयोगस्थलं विविच्य तत्सम्बन्धिनिबन्धोऽयं प्रस्तुतो विदुषां मनोमोदयेदिति कामये। तथा च भ्रान्तेर्यास्त्रुटयो निःसरेयुस्तासां परिशोधनं विधायैव सुधीभिरनुग्राह्योऽयं जन इति शम्।

● ● ●

---

१. द्रष्टव्यम्—व्युत्पत्तिवादः, आख्यातविवरणम्—पृ० ३२५; २. द्र० तदेव—पृ० ३३५।

# स्फोटवादविलासः

श्रीरामनारायणाचार्यः
प्रधानाचार्यः
वैकुण्ठनाथपवहारीसंस्कृतमहाविद्यालयस्य, वैकुण्ठपुरम्, देवरिया

परमतनिराकरणपूर्वकं स्वसिद्धान्तप्रतिपादनेनालोच्यविषयः स्पष्टो भवति। तत्र नैयायिका अनया रीत्या शब्दानित्यत्वं साधयन्ति, यथा प्रथमक्षणे वर्णं उत्पद्यते, द्वितीयक्षणे तिष्ठति, तृतीयक्षणे पूर्ववर्णो नश्यति द्वितीयो वर्णस्तिष्ठति, तत्रैव वर्णान्तरमुत्पद्यते द्वितीयश्च नश्यति। अत्रैतादृशी शङ्का जायते यदेवंविधस्यानित्यस्य शब्दस्य श्रोत्रेण ग्रहणं कुतः? भेर्यादिदेशे शब्दो जायते, श्रोत्रं तु पुरुषदेशेऽस्ति, अस्याः शङ्काया अनया रीत्योत्तरं ददन्ते तार्किकाः—भेरीदेशे जातः शब्दो वीचितरङ्गन्यायेन कदम्बमुकुलन्यायेन वा सन्निहितं शब्दान्तरमारंभते, स च शब्दः शब्दान्तरमिति क्रमेण श्रोत्रदेशे जातः, अन्त्यः शब्दः श्रोत्रेण गृह्यते, नाद्यः, न मध्यमः, भेरीशब्दो मयाश्रुत इति मतिस्तु भ्रान्तैव, तथा हि शब्दोऽनित्यः, सामान्यवत्त्वे सति, अस्मदादिबाह्येन्द्रियग्राह्यत्वाद् घटवत्। यथा घटो घटत्वजातिमान् बाह्येन्द्रियेण चक्षुषा गृह्यते, अतोऽनित्यः, तथैव शब्दोऽपि शब्दत्वजातिमान् बाह्येन्द्रियेण श्रोत्रेण गृह्यते, अतः सोऽपि अनित्य इति नैयायिकाः।

न्यायमूलभूता वैशेषिकास्तु इत्थं शब्दस्यानित्यत्वं समर्थयन्ति। गुणस्य सतोऽपवर्गकर्मभिः साधर्म्यम्। सतो नित्यस्य शब्दस्य लिङ्गाभावात् शब्दनित्यत्वसाधकप्रमाणाभावादनित्यत्वम्। यत्त्वसौ नोपलभ्यते, तदैतस्य सत्त्वेन किञ्चित् प्रमाणमस्ति; किञ्च चैत्रो वक्ति, मैत्रो वक्ति इति कुड्यादिना आवृतोऽपि चैत्रादिवचनेनानुमीयते। कुतस्तद्वचनस्य भिन्नरूपत्वात् शब्दस्य नित्यत्वे तस्यैकत्वादयं चैत्रशब्दः, अयं मैत्रशब्द इत्याकारिका भिन्ना भिन्ना अनुमितिर्न स्यात्। तस्मात् शब्दोऽनित्योऽनेकश्चेति वैशेषिकाः।

मीमांसकाः, वेदान्तिनः, सांख्याः, योगिनश्च शब्दानां नित्यत्वं सङ्गिरन्ते। गौरित्यत्र वर्णा एव शब्दास्तेषामेवार्थेन शक्तिरूपः सम्बन्धः। न च स्फोटात्मकः शब्दः, कुतः? वर्णत्रयातिरिक्तस्य बुद्धावप्रतिभासमानत्वेन तदभावात्। अर्थप्रतीतिरूपकार्येण स्फोटस्य सिद्धिर्भवितुं नार्हति, कुतः? अन्योऽन्याश्रयत्वात् 'अन्योऽन्याश्रयाणि कार्याणि न प्रकल्पन्ते, न नौर्नावि बद्धा इतरत्राणाय कल्पते'[1]। तस्मात् स्फोटरूपकारणसिद्धावर्थप्रतीतिरूपकार्यसिद्धिः, अर्थप्रतीतिरूपकार्यसिद्धौ स्फोटावगतिरित्यन्योऽन्याश्रयः सुव्यक्तः। तस्मान्नास्ति स्फोटाख्यः कश्चन वर्णातिरिक्तोऽन्यपदार्थ इति मीमांसकाः।

अत्र स्फोटवादिनो वैयाकरणाः शब्दानित्यत्ववादिनां नैयायिकानां मतेऽनन्तवर्णकल्पनं तद्द्वारा तद्ध्वंसप्रागभावादिकल्पनम्, पदादीनां बोधकत्वसिद्धये तत्प्रयोजकस्मृतिस्वीकारे च

---

१. महाभाष्यम्।

महद् गौरवम् । एवं मीमांसकानां मते वर्णानां विभुत्वनित्यत्वस्वीकारे यद्यप्यनन्तवर्णतद्ध्वंसप्रागभावानामकल्पनया वर्णानित्यत्ववादिनामपेक्षया लाघवं वर्तते; तथापि नवस्वराणां त्रयस्त्रिंशद् व्यञ्जनानां विसर्गादीनाञ्च नित्यानां स्वीकरणे तद्व्यञ्जकानां ध्वनीनां क्रमेणाभिव्यक्तिमता प्रत्येकवर्णेनार्थस्यावोधात् सकलोच्चारणानन्तरं बोधदर्शनात् संहत्यकारितोपपत्तये तत्प्रयोजकभावनाख्यसंस्कारस्मृतिकल्पने च गौरवात् सर्वानुभूतपदवाक्यादीनां मिथ्यात्वकल्पनस्यानुचितत्वात् तेषां मीमांसकानां मतमपि न स्मरणीयं प्रतिभाति, अतोऽत्वकत्वादिधर्मवन्तो वर्णरूपा ध्वनय एवार्थस्य प्रत्यायकं ध्वनिरूपरूपितं कालत्रयाबाधितं शब्दब्रह्मैव व्यञ्जयन्ति । तदेव शब्दब्रह्म स्फोट इत्युच्यते । स्फुटत्यर्थोऽनेन, अस्माद् वा स्फोटः करणे अपादाने वा । 'अकर्तरि च कारके संज्ञायाम्[1]' इति घञा सिद्धिः । स एव स्फोटस्तत्तदर्थनिरूपिततत्तच्छक्तिमान् कत्वादिविशिष्टवर्णातिरिक्तः पूर्वपूर्ववर्णानुभवसहचरितान्त्यवर्णानुभवव्यङ्ग्योऽर्थप्रत्यायकः शब्दस्तत्तदर्थनिष्ठविषयतानिरूपकशक्तिमत्त्वं स्फोटत्वम् । वृत्त्याश्रयः शब्दः । प्रत्येकं वर्णा भवितुं नार्हन्ति, वर्णानामुच्चरितप्रध्वंसित्वेन यौगपद्यासम्भवात् । अभिव्यक्तेरुत्पत्तेर्वा क्षणस्थायित्वात्, क्षणात्मककालस्य प्रत्यक्षायोग्यत्वेन तदवच्छिन्नवर्णस्यापि अप्रत्यक्षत्वात्, 'इको यणचि[2]' इत्यादौ तस्मिन्निति परिभाषोपस्कृतवाक्यार्थे अयं पूर्वः, अयं पर इति नष्टस्य प्रत्यक्षविषये इदंशब्देन पौर्वापर्यव्यवहारायोगाच्च ।

यत्तु तार्किका वर्णानामनित्यत्वेऽपि उत्तरोत्तरवर्णे पूर्वपूर्ववर्णवत्त्वम्, अव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशाद् गृह्यत इति पदस्य प्रत्यक्षत्वात् शाब्दबोधः । यद्वा पूर्वपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जायमाना एव सन्तीति न प्रत्यक्षानुपपत्तिः । यद्वा पूर्वपूर्ववर्णानुभवजन्यसंस्कारसध्रीचीनचरमवर्णानुभवतः शाब्दबोध इत्याहुः, तदपि रमणीयं न प्रतिभाति, कुतः? आद्ये नष्टविद्यमानयोः पौर्वापर्यस्य वक्तुमशक्यत्वेनायं पूर्वः, अयं पर इत्यभिलापासम्भवेनाव्यवहितोत्तरत्वसम्बन्धायोगात् । नष्टविद्यमानयोरव्यवहितोत्तरत्वसम्बन्धस्य वक्तुमशक्यत्वाच्च । द्वितीये शब्दजशब्दन्यायेन पदप्रत्यक्षोपपादनेऽपि पदस्याविद्यमानत्वेन तत्र शक्त्याश्रयस्य ग्रहणानुपपत्तेः । अविद्यमान आश्रयत्वाङ्गीकारे नष्टो घटो जलं वा नित्याद्यापत्तेश्च, तृतीये येन क्रमेणानुभवस्तेनैव क्रमेण तत्संस्कारस्थितिरित्यत्र विनिगमकाभावात् सरो रसो नदी दीन इत्यादौ विपरीतसंस्कारोद्बोधेन प्रत्येकमन्यार्थप्रत्ययापत्तेः ।

उत्पत्तिविनाशवद् वर्णसमुदायरूपपदस्य मनुष्यादिवद् भेदे एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत् सर्वयागेषु अङ्गं भवतीति भाष्यविरोधापत्तेश्च । किञ्चैवं पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैव हानिः, तदुक्तं हरिणा —

अशब्दो यदि वाक्यार्थः पदार्थोऽपि तदा भवेत्[3] ।

एवञ्च महद्विप्रतिपत्तौ समायातायां को वा वृत्त्याश्रयः शब्द इति प्रश्ने स्फोटात्मकः शब्दः समुपस्थितो भवति । सम्प्रति स्फोटस्वरूपं स्पष्टतया स्फोर्यते । तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परावागुच्यते, मूलाधारो

१. अष्टाध्यायी—३।३।१९ । २. तदेव—६।१।७७ । ३. वाक्यपदीयम्—२।१६ ।

मूलप्रकृत्यात्मिका कुण्डलिनी सा मध्यादिभिर्वेष्टिता सर्पवत्तिष्ठति । मूलाधारादुत्थितः पवनो नाडीद्वारेण कार्याणि करोति । तदुक्तं संगीतरत्नाकरे[1]—

गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ।।

आधाराद् द्व्यङ्गुलादूर्ध्वं मेहनाद् द्वयङ्गुलादधः ।
एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभम् ।। इत्यादि ।

नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते । एतद् द्वयं वाग् ब्रह्मयोगिनां समाधौ निर्विकल्पक-सविकल्पकज्ञानविषय इत्युच्यते । ततो हृदयपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते । तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रमता च मूर्द्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्राह्या वैखरी वागुच्यते । तदाह—

परावाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ।।

वैखर्या हि कृतो नादः परश्रवणगोचरः ।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते ।।

युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते । तत्र मध्यमानादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जकः । वैखरीनादो ध्वनिः, सकलजनश्रोत्रग्राह्यो भेर्यादिनादवन्निरर्थकः । मध्यमानादश्च सूक्ष्मतरः करापिधाने जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दब्रह्मरूपस्फोटव्यञ्जकश्च । तादृशमध्यमानादव्यंग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च । तदाह हरिः—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।[2]

यथा घटपदादिपदार्थातिरिक्तत्वेनाकाशो न कुत्रापि समुपलभ्यते, किन्तु तद्रूपरूषित एव । अतः स्फुट्यते वर्णादिभिरभिव्यज्यत इति, स्फुटत्यर्थोऽस्मादिति स्फोटनिर्वचनमपि संगच्छते । स च स्फोट एकोऽखण्डश्च, तथापि पदं वाक्यं जपाकुसुमादिलौहित्यपीतत्वादिव्यञ्जकोपरागवशात् लोहितः, पीतः, स्फटिक इति भानवद् वर्णादिव्यङ्ग्यो वर्णरूपः, पदरूप वाक्यरूपश्च । यथा मुखे मणि-कृपाण-दर्पणव्यञ्जकोपाधिवशाद् दैर्घ्य-वर्तुलत्वादिमानम् । उक्तञ्च हरिणा—

यथा रक्तगुणे तत्त्वं कषाये व्यपदिश्यते ।
संयोगि संनिकर्षात्तु वस्त्रादिष्वपि गृह्यते[3] ।।

अयं भावः—यथा रक्तगुणे वर्तमानं रक्तत्वं स्वसमवायिसमवायसम्बन्धेन कषाये द्रव्ये इदं रक्तमिति व्यवह्रियते, एवं व्यञ्जकवर्णपदादिरूपत्वं नानुपपन्नं स्फोटस्य ।

---

१. सङ्गीतरत्नाकरः—२।१२०,१४५ । २. वाक्यपदीयम्—१।१; ३. तदेव—३।१।७ ।

स्फोटस्याखण्डत्वेऽपरं दृष्टान्तमाह हरिः—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥[1]

यथा वर्णेष्वेकारौकारादिसन्ध्यक्षरेषु प्रतीयमानाऽपि वस्तुतोऽवयवा न सन्ति, तथैव पदे वर्णाः, वाक्ये पदानि च न सन्ति। व्यञ्जकध्वनिगतकत्वगत्वादिकं स्फोटे भासते। बिम्बगतधर्मवैशिष्ट्येनैव प्रतिबिम्बस्य लोकेऽवधारणाद् व्यञ्जकरूपितस्यैव स्फोटकादेर्भानाच्च। यथा चैकस्याकाशस्य घटाकाशः, मठाकाश इत्यौपाधिको भेदः, जीवानाञ्च परस्परं भेदः। एवं स्फोटे व्यञ्जकध्वनिगतकत्वादिमानात् ककारो बुद्ध इत्यौपाधिको भेदव्यवहारः। औपाधिको भेद इत्यत्रोपाधिर्घटत्वेन कत्वेन भिन्न आकाशः, स्फोट एक एवेति तात्पर्यम्। पदवाक्ययोः सखण्डत्वपक्षे त्वन्तिमवर्णव्यङ्ग्यः स्फोट एक एव। पूर्वपूर्ववर्णस्तु तात्पर्यग्राहकः। यथा न्यायनये 'चित्रगुः' इत्यादौ पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेनेति व्युत्पत्तिमिया गोपदस्य चित्रगोस्वामिनि लक्षणा, चित्रपदं तात्पर्यग्राहकम्, तथैवात्रापि व्यवस्था।

सम्प्रति प्रसंगवशात् स्फोटे कारणीभूतो ध्वनिर्निरूप्यते। ध्वनिस्तु द्विविधः—प्राकृतो वैकृतश्च। प्रकृत्याऽर्थबोधनेच्छया स्वभावेन वा जातः स्फोटव्यञ्जकः प्राकृतध्वनिः, तस्मात् प्राकृतात् जातो विकृतिविशिष्टश्चिरस्थायी निवर्तको वैकृतिकः। तत्र प्राकृतध्वनिं विना स्फोटः सामान्यरूपेण वा न भासत इति प्राकृतध्वनिव्यतिरेकेण स्फोटानुपलम्भात् प्राकृतध्वनिं स्फोटस्वरूपमिव मन्यन्ते। वैकृतध्वनिस्तु प्राकृतध्वनिप्रतीतं स्फोटमुत्तरकालं स एवायमित्युल्लेखेन चिरकालमुपलम्भयति, तदुक्तं हरिणा—

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥[2]

अयं भावः—प्राकृतध्वनिजन्याभिव्यक्तेरूर्ध्वम्, अनन्तरं वैकृतध्वनयो जायमाना द्रुतादिवृत्तिभेदे तावत्कालं स्फोटोपलम्भे कारणानि भवन्ति। तैर्वैकृतध्वनिभिः स्फोटरूपं न भिद्यते, वृत्तिभेदेऽपि स एवायमकार इति प्रत्ययात्।

यथोदितः प्रकाशः पदादिभ्यो भिन्नं घटं प्रकाशयति, अनन्तरं तु प्रकाशेन पुनः पुनर्दृश्यमानोऽपि घटो न पूर्वप्रकाशितघटाद् भेदमवलम्बते, तथा प्राकृतध्वनिरेव भिन्नं स्फोटमभिव्यञ्जयति। अनन्तरं वैकृतध्वनिस्तु पूर्वाभिव्यक्तस्यैव तावत्कालमुपलम्भे हेतुर्भवति, न पूर्वाभिव्यक्ताद् भेदे। अत एव द्रुतादिवृत्तिभेदेऽपि अकार एव पुनः पुनरुपलभ्यते। भगवान् भाष्यकारोऽपि 'भेर्याघातवत्' इति वार्त्तिकव्याख्यानावसरे। तद्यथा—भेर्या हन्ता भेरीमाहत्य कश्चिद् विंशति पदानि गच्छति, कश्चित् त्रिंशत्, कश्चित् चत्वारिंशत् स्फोटस्तावानेव ध्वनिकृता वृद्धिः इत्युक्तवान्। एतेन ध्वनिभेद एव न स्फोटभेद इति प्रतीयते।

शब्दस्य नित्यत्वेऽपि तस्य सर्वदोपलब्धिः कथं न भवतीति शङ्काया उत्तरं भाष्यकारमुखेनैव श्रूयताम्। तत्र भाष्ये—'स्फोटः शब्दः, ध्वनिः शब्दगुणः'[3] इति स्फोटोपलब्धिप्रति-

---

१. वा० प०—१।७३।  २. वाक्यपदीयम्—१।७७।  ३. महाभाष्यम्—१।१।७०।

बन्धकस्तिमितवाय्वपसारणद्वारा स्वधर्मरूषिततदुपलब्धिहेतुत्वेन ध्वनिः स्फोटाख्यस्य शब्दस्य गुण उपकारक इति तदर्थः। एतदुक्तं भवति—स एवायमकार इति प्रत्यभिज्ञानात् स्फोटस्य नित्यत्वे सिद्धे सर्वदा तदुपलम्भाभावो व्यञ्जकाभावकृतः, न तु स्वभावकृतः, यथा मेघान्धकारे विद्युज्जनिता घटबुद्धिर्न चिरमनुवर्तते। तत्र व्यञ्जकाभाव एव कारणम्, न तु घटाभावः। तदाहुः श्लोकवार्त्तिककाराः—

सन्नेव साधनाभावाच्छब्दो नैवोपलभ्यते।
क्षणिकं साधनं चास्य बुद्धिरप्यनुवर्तते[1]॥
मेघान्धकारशर्वर्यां विद्युज्जनितदृष्टिवत्।

एवं वृत्तयोऽपि द्रुतमध्यादिभेदेन त्रिधा, यथा चोक्तम्—

अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता।
शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता॥

सम्प्रति समासेनैव वाचकत्वरीतिः प्रदर्श्यते—केनचिद् घटमानय इति वैखरीनादः प्रयुक्तः, स केनचित् श्रोत्रेन्द्रियेण श्रावणप्रत्यक्षविषयतां नीतः। स च नादः श्रोत्रेन्द्रियद्वारा बुद्धिहृद्गतः सन्नर्थबोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति, तस्मादर्थबोधः, स्फुटत्यर्थोऽस्मादिति स्फोटः। उच्चारयितुस्तु युगपदेव मध्यमा-वैखरीभ्यां नाद उत्पद्यते, तत्र वैखरीनादो वह्नेः फूत्कारादिवद् मध्यमानादस्योत्साहकः। मध्यमानादः स्फोटं व्यञ्जयतीति शीघ्रमेव ततोऽर्थबोधः, अनुभवसिद्धत्वात् परस्य विलम्बेन शाब्दबोधः। अत एव श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिचलित आकाशदेशः शब्द इत्याकारको ग्रन्थः संगच्छते। स च प्रयोगेण वैखरीरूपेणाभिचलितः—स्वरूपरूषितः कृत इति तदर्थः। तत्रापि शक्यत्वस्येव शक्ततावच्छेदिकाया वर्ण-पद-वाक्यनिष्ठजातेर्वाचकत्वम्। तदुक्तम्—अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता' इति।

तस्मादष्टविधस्फोटात्मकः शब्दो वृत्त्याश्रयः। वस्तुतस्तु 'वाक्यस्फोटः, वाक्यजातिस्फोट एव वृत्त्याश्रयः, तत एव लोकेऽर्थबोधः।

उक्तञ्च—

वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः।
साधुशब्देऽन्तर्गता बोधका न तु तत्स्मृताः॥ इति।

● ● ●

१. श्लोकवार्त्तिकम्—शब्दनित्यताधिकरणम्—४०-४१।

# शब्दशक्तिः, तत्सम्बद्धयन्त्राणाञ्च विमर्शः

डॉ० रामनारायणदासः

नव्यव्याकरणाचार्यः, पी-एच्० डी०, डी० लिट्०, साइण्टिस्टपूल-आफीसर, वेदवेदाङ्गसंकाये

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

निगमागमयोगतन्त्राणि नव्यप्राचीनव्याकरणग्रन्थाँश्च प्रातिशाख्यम्, शिक्षा नूतनभौतिक-विज्ञानम्, शब्दविज्ञानञ्च मन्त्रशक्तिप्रतिपादकग्रन्थाँश्च समाश्रित्यायं विषयः प्रस्तोष्यते। शब्द-निष्ठे द्वे शक्ती लोके दृष्टिगोचरीभवतः।

१. पदार्थबोधनरूपा, २. पदार्थनिर्माणसंघटनविघटनादिरूपा च। तदित्थमयं निबन्धो भागत्रये सम्पत्स्यते—१. पदार्थबोधनशक्तिवादः, २. पदार्थनिर्माणादिरूपा शक्तिः, ३. यन्त्रभागः।

**पदार्थबोधनशक्तिवादः**

पदार्थबोधनरूपा शक्तिः शब्दनिष्ठवृत्तभेदभूतः। वृत्तेश्चान्यदपि भेदद्वयं विद्यते लक्षणा व्यञ्जनेति च। अतोऽयं भागः शक्तिलक्षणाव्यञ्जनाभेदेन भागत्रये विभक्तः। एतासां तिसृणां वृत्तीनां मध्ये मुख्या वृत्तिः शक्तिरेव, लक्षणाव्यञ्जनयोर्मुख्यार्थज्ञानाधीनत्वात्। इयं वाच्यवाचकतारूपा शक्तिस्त्रिधा—१. साधुशब्दनिष्ठा वाचकत्वरूपा शक्तिः; २. अपभ्रंशनिष्ठा वाचकत्वरूपा शक्तिः, ३. तिर्यगादियोनिजोच्चरितशब्दनिष्ठा।

प्रमाणभूतः शब्द एव बोधकः। आप्तोपदेशरूपः शब्दश्च प्रमाणम्। चरकसंहितायां भगवान् पतञ्जलिराप्तलक्षणं प्रोक्तवान्, तद्यथा—'**आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः सः।**' न्यायभाष्यकारास्तु—'**आप्तोपदेशः शब्दः**' (न्या० सू० १।१।७) इति **सूत्रेऽर्थसाक्षात्कारवान् आप्तः, स यथादृष्टार्थंबुबोधयिषया यं प्रयुङ्क्ते स प्रमाणशब्दः**' इति ऋष्यार्यम्लेच्छानां समानमाप्तलक्षणमित्याह। तत्र ऋषिः वेदः, म्लेच्छः अपशब्दवक्ता। एवञ्च न केवलं संस्कृतशब्दा एव वाचकत्वरूपशक्तिविशिष्टाः, अपि तु अपभ्रंशा अपि।

वस्तुतस्तु न केवलं मानवीयभाषाघटकशब्दा एव वाच्यवाचकत्वरूपशक्तिमन्तः, अपि तु तिरश्चामपि शब्दा अर्थाववोधकाः। न च पशुपक्ष्यादीनां शब्दैरस्माभिरर्थो नावबुध्यते, अतस्तेषां शब्देषु वाचकत्वरूपा शक्तिर्न स्वीकार्येति वाच्यम्, अस्माभिः सङ्केतग्रहाभावात्। तिर्यगादियोनिजोच्चरितशब्दानामर्थावबोधकत्वादेव पातञ्जलयोगदर्शने—'**शब्दार्थयोरितरेतरा-ध्यासात् सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्**' इत्यत्र सर्वभूतरुतज्ञानमित्युक्तम्।

तदित्थं यथा साधुशब्दानां नित्यत्वम्, तथैवासाधुशब्दानामपि तिरश्चाम्, शब्दाना-मनादिकालतः प्रसिद्धेः। अत एव अनया युक्त्या दैवी वागेव नित्या, नान्येति सर्वं ध्वस्तम्। अनुपलब्धिवशादयं शब्दो नासीत्, न वा विद्यत इति न वाच्यम्, देशान्तरे तेषां सत्त्वात्।

प्रतिपादितञ्चैतद् महाभाष्यस्य पस्पशाह्निके। तत्रैतदीयोंऽशो द्रष्टव्यः। तत्रोक्तदिशा अनुपलब्धशब्दानां सत्ता अनुसन्धेया। यत्तु वाक्यपदीयस्य ब्रह्मकाण्डे[1]—

अम्बाम्बेति यथा बालः शिक्षमाणः प्रभाषते।
अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः॥
सर्वं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते॥

इत्यनयोः कारिकयोरपभ्रंशाः साधुव्यवहिताः साधुव्यवधानेन साधुशब्दार्थज्ञानद्वारा अर्थबोधकाः, अर्थात् प्रथमं घटादिसाधुशब्दार्थज्ञाने जाते सति घड़ाशब्दार्थज्ञानं जायते। एवञ्चासाधुशब्दा शक्तेरनाश्रयीभूताः। ततश्च परम्परया असाधुशब्दा वाचकत्वंगताः संस्कृतानभिज्ञेषु। उक्तञ्च वाक्यपदीयस्य ब्रह्मकाण्डे—

पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः॥[2] इति।

एवञ्च साधुशब्देष्वेव वाचकत्वशक्तिः, अपभ्रंशेषु तु परम्परया इत्युक्तम्। यच्च—'अनित्यदर्शिना त्वस्मिन् वादे बुद्धिविपर्ययः'[3] इत्यस्यां कारिकायामपभ्रंशा एव वाचकाः, न तु साधुशब्दा इत्येवमुक्तम्, तत्सर्वं पूर्वपक्षीयं वाक्यम्। वस्तुतस्तु साधुशब्देष्विवापभ्रंशेष्वपि वाचकत्वरूपा शक्तिः सन्निहिता। एतदुपोद्वलकं प्रमाणं यथा—

उभयेषामविच्छेदादन्यशब्दविवक्षया।
योऽन्यः प्रयुज्यते शब्दो न सोऽर्थस्याभिधायकः॥[4] इति।

न हि घट इति प्रयोक्तव्ये पट इति प्रयुक्ते कस्यापि घटरूपार्थस्य प्रतिपत्तिर्भवति। उभयेषां साधूनामसाधूनामविच्छेदेन शिष्टैः स्मरणाद् वाचकत्वं सममिति शेषः। तदुक्तं भाष्ये—'समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः क्रियते' इति। तथा च स्वमते पुण्यजनकतावच्छेदकधर्मवत्त्वं बाह्यमलसंक्रमरहितत्वं वा साधुत्वम्, तद्रहितत्वञ्चासाधुत्वमिति भावः। एवञ्च 'उच्चरितः शब्दः प्रत्याय्यकः, नानुच्चरितः' इति न्यायेनापभ्रंशे उच्चरिते सत्यनुच्चरितः शब्दो नार्थप्रत्याय्यकः।

**पदार्थनिर्माणरूपा शक्तिः**

शब्देषु न केवलं पदार्थबोधकत्वरूपा शक्तिः, अपि तु तेषु वस्तुनिर्माणसंघटनविघटनादिरूपा अपि शक्तिर्विद्यते। शब्दघटकध्वनिषु च विविधचित्रनिर्माणकर्तृत्वरूपा अपि शक्तिः सन्निहिता। एनं विषयं शब्दवैज्ञानिका सम्यक्तया जानन्ति। वायसफिर्गवाख्यग्रन्थस्य लेखिका मिसबट्सहयूजो लन्दनदेशस्थे लार्डलिटनशिल्पसदने शब्दविज्ञानस्य स्मारम् (चमत्कारं वा)

---

१. वाक्यपदीयम्–१।५२। २. तदेव–१।१५४। ३. तदेव–१।१५१।
४. वा० प० १।१५६।

प्रादर्शयत् ।[1] सा विदुषी स्वनिर्मितम् इडौफोनाख्यं संगीतयन्त्रं वाद्यविधिना अवादयत् । संगीत-यन्त्रनिःसृतैर्ध्वनिभिर्नीलपीताद्यनेकरूपाणि निर्मितानि । सा एकदा स्वसङ्गीतयन्त्रं वादयन्ती डेजीनामकं पुष्पं सङ्गीतयन्त्रोद्भूतध्वनिनाऽरचयत् । अतः परं पैनसीनामकं पुष्पम्, मत्स्य-मकराद्यनेकेषां समुद्रोत्पन्नानां जीवानाम्, वृक्षपाषाणादीनाञ्च रूपाणि सा एव सङ्गीतयन्त्र-ध्वनिना निर्मितवती ।

किञ्च, फ्रान्सदेशवास्तव्या एका विदुषी शब्दविज्ञानस्य परीक्षणं कृतवती[2] । एकदा सा कैथोलिकमतस्यानुयायिनं रोमदेशवास्तव्यमास्तिकजनं धार्मिकं गीतं श्रावयितुमामन्त्रयत । तथा सा धार्मिकं गीतमगायत, भक्तियुतैर्धार्मिकसङ्गीतध्वनिभिश्चित्रपटे स्वक्रोडे शिशुं सन्निवेशि-तवत्याः कस्याश्चित् स्त्रियाश्चित्रं निर्मितम्, सा मरियमाख्या, तस्याः क्रोडं समुपविष्टस्य यस्य शिशोश्चित्रम्, तस्य शिशोर्नाम ईशा इति फ्रांसदेशवास्तव्यया विदुष्या आहूत ईसाख्यस्येश्वरस्य स्तुतिं कृतवान्, अतिभक्तियुतहृद्गतभावप्रभावितसंगीतध्वन्यनुरूपमेव चित्रं चित्रफलके प्रादुरभूत् । एवमन्यदपि सा विदुषी शब्दविज्ञानस्य परीक्षणं कृतवती ।

एवं शब्देष्वाकर्षणविकर्षणमारणमोहनादिरूपा अपि शक्तयः सन्निहिताः । शब्देषु या संघटनविघटनादिरूपा शक्तिः सा मन्त्रविज्ञानविद्यानाम्नाऽपि प्रसिद्धा । इयं शक्तिर्न केवलं वैदिकलौकिकोभयविधसंस्कृतशब्देषु, अपि तु सावराद्यपभ्रंशशब्देष्वपि दृश्यते । किञ्च तिर्यग्योनिजपशुपक्ष्याद्युच्चरितशब्देष्वपि पदार्थसंघटनविघटनरूपा शक्तयो यत्र तत्र दृश्यन्ते, स्थावरवृक्षा अपि परस्परं वार्तां कुर्वन्ति, तेषां शब्देष्वप्यतीव सूक्ष्मेषु ध्वनिषु महती शक्ति-र्विद्यत इत्यस्यान्वेषणं डॉ० जगदीशचन्द्रवसुनामा वैज्ञानिकः कृतवान्[3] । तदित्थमयमंशो भागचतुष्टये विभक्तः ।

१. अमरभाषाघटकशब्दनिष्ठा पदार्थनिर्माणादिरूपा शक्तिः ।

२. अपभ्रंशशब्दनिष्ठा पदार्थनिर्माणादिरूपा शक्तिः, यथा सावरादिमन्त्राः ।

३. तिर्यग्योनिजोच्चरितशब्दनिष्ठा पदार्थनिर्माणादिरूपा शक्तिः सिंहोलूकादिशब्दाः ।

४. वर्णरहिताव्यक्तशब्दनिष्ठा पदार्थनिर्माणादिरूपा शक्तिः पराश्रव्यध्वनयः ।

एवं शब्दनिष्ठां सृष्टिपालनसंहाररूपां विविधशक्तिं विविच्य समाधेयम् । लघुनिबन्धे सर्वमाख्यातुमसम्भवम् ।

---

१. वायसफिगर्ज पुस्तक की लेखिका मिस० वट्सहयूज ने शब्दविज्ञान के चमत्कार क्रियात्मकरूप से लन्दन के लार्डलिटनशिल्प सदन में दिखाये थे । वह अपने बनाये सङ्गीत-यन्त्र 'इडोफोन' को विधिपूर्वक बजाती थी, जिससे अनेकों प्रकार के रूप बन जाते थे । एक बार उसने डेजीनामक पुष्प की आकृति बनायी और उसकी व्याख्या भी की कि सङ्गीत-यन्त्र को किस विधि से बनाने से ऐसा हुआ ।

—डॉ० रमनलाल गौतम मन्त्र-महाविज्ञान, प्रथम खण्ड, पृ० सं० ३६

२. पूर्वोद्धृतग्रन्थस्य ३६ तमे पृष्ठे द्रष्टव्यम् ।

३. पराश्रव्यध्वनिर्वैज्ञानिकपद्धत्या भौतिकवैज्ञानिकैः समुत्पाद्यते । भौतिकविज्ञानग्रन्थेषु एतदीयोंऽशो द्रष्टव्यः ।

**तत्सम्बद्धयन्त्राणाञ्च विमर्शः**

प्रसुप्ता शब्दनिष्ठा शक्तिः अनुष्ठानविधिना यन्त्रद्वारा च समुद्बुद्ध्यते गृह्यते च। भरद्वाजकृतयन्त्रार्णवतन्त्रेऽनेकेषां यन्त्राणां चर्चा विद्यते। परन्त्वत्र शब्दसम्बद्धयन्त्रणामेव प्रयोजनम्। यन्त्रार्णवस्य वैमानिकप्रकरणे रहस्याधिकारी इति सूत्रे—

१. महाशब्दविमोहनयन्त्रम्।

२. परशब्दग्राहकयन्त्रम्।

३. शब्दकेन्द्रमुखयन्त्रम्।

**महाशब्दविमोहनयन्त्रम्**

विमानस्थसप्तनालवायुमेकीकृत्य शब्दकेन्द्रमुखेऽन्तर्धाय पश्चात् कीलिं प्रचालयेत्। तद्वेगाच्छब्दप्रकाशिकोक्तरीत्या द्विषष्टिध्मानकलासंघट्टणशब्दवत् महाशब्दो जायते, तद्रवस्मरणात् सर्वेषां हृदयकम्पनं भवति, विष्कुत्रयप्रमाणकम्पनं यदा भवति, स्मृतिविस्मरणं भवति, तद्द्वारा परेषां विमोहनक्रियारहस्यम्।

**परशब्दग्राहकयन्त्रम्**

सौदामिनीकलोक्तप्रकारेण विमानस्य शब्दग्राहकयन्त्रद्वारा परविमानस्थजनसम्भाषणादिसर्वशब्दाकर्षणक्रियारहस्यम्।

**शब्दकेन्द्रमुखयन्त्रम्**

एवमुक्त्वा सङ्ग्रहेण विद्युदर्पणयन्त्रकम्।
अथेदानीं शब्दकेन्द्रमुखयन्त्रं प्रचक्षते॥ १२७॥

तदुक्तं क्रियासारे—

शब्दोत्पत्तिस्थानभेदाः शब्दकेन्द्र इतीरिताः।
तेभ्यः प्रस्तरणं यत् स्याच्छब्दादीनां दिक्प्रभेदतः॥ १२८॥
तदेव तच्छब्दकेन्द्रमुखस्थानमितीर्यते।
तत्र शब्दोपसंहारार्थं तस्मिन् सुप्रतिष्ठितम्॥ १२९॥
यन्त्रं यत् तच्छब्दकेन्द्रमुखयन्त्रमितीरितम्॥

एतेभ्यो भिन्नानि तान्त्रिकान्यपि यन्त्राणि सन्ति, येषामुपयोगेन मन्त्रनिष्ठा शक्तिः समुद्बुद्ध्यते।

एवं शब्दसम्बन्धियन्त्रं द्विविधम्, १—कर्गलादिपत्रेषु रेखया अङ्कितम्, तद्यथा—त्रिकोणम्, चतुष्कोणम्, षट्कोणमित्यादि। हनुमदादिदेवानां त्रिकोणादियन्त्रेषु मन्त्राक्षराणि अङ्कीक्रियन्ते। अनुष्ठानविधिना समर्चिते सति यन्त्रोल्लिखितमन्त्रनिष्ठा शक्तिरुद्बुद्धा सती कार्यं साधयति। द्वितीयं शब्दयन्त्रं चक्रचीवरादिभिर्निर्मीयते। तद्यथा—"महाशब्दविमोहनयन्त्रम्, परशब्दग्राहकयन्त्रम्, शब्दकेन्द्रमुखयन्त्रमित्यादि। शब्दशक्तितत्सम्बद्धयन्त्रविषयकं यावत् मम ज्ञानं तावत् संक्षेपतो मया लिपिबद्धं कृतमिति शम्।



# भारतीयदर्शनदिशा भाषातत्त्वसमीक्षणम्

डॉ० शारदाचतुर्वेदी, एम्० ए०, पी-एच्० डी०

प्राध्यापिका—भाषाविज्ञानविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

**निरुक्तमते शब्दार्थमीमांसा**

अर्थप्रतीतये शब्दार्थनिर्वचनादिकं प्रधानम्। निरुक्ते शब्दार्थनिर्वचनमेव मुख्यम्। निघण्टुशब्दस्य विवेचन एव व्याख्यानप्रकारः प्रदर्शितः; निघण्टुशब्दस्य निगमनाद् आहननात् समाहरणाद् वा सिद्धिः प्रदर्शिता। अर्थवशादेव शब्दस्य निर्वचनभेद उपलभ्यते। तत्र शब्दस्वरूप-निरूपणवेलायां यास्कः कथयति **'इन्द्रियनित्यं वचनमौदुम्बरायणः'**[1] वचनशब्दस्यार्थो वाक्यं शब्दः पदं वर्णो वा उच्यत इति वचनम्। अर्थाद् उच्चार्यते बोध्यते प्रवृत्तिनिवृत्ती अनेन, अर्थाद् यस्य उच्चारणे सति विधिनिषेधोऽवगम्येते तद् वचनम्। अनया व्युत्पत्त्या वचनशब्दार्थो वाक्यम्, शब्दः पदं वा उच्यते उच्चार्यत इदम् इति व्युत्पत्त्या वचनशब्दार्थो वर्णो भवति। औदुम्बरायणमते वाक्यम्, वाक्यावयवभूतं पदम्, पदावयवभूतो वर्णो वा अनित्य एव, यतो हि यावत् पर्यन्तं वक्तुर्वागिन्द्रिये श्रोतुश्श्रोत्रिन्द्रिये वा शब्दोऽवतिष्ठते, तावदेव तत् तिष्ठति। इन्द्रियेभ्यः प्रच्युतः सन्नेव विनाशमेति, अर्थादिन्द्रियनियतः शब्द उच्चारणकालमात्रस्थायी श्रवणकालमात्रस्थायी वा।[2] यावदेव वक्तुर्वागिन्द्रिये वचनम्, तावदेव तदस्तीति शक्यते वक्तुम्, प्रच्युतश्च नास्त्येव, उच्चरितध्वंसित्वाद् वर्णानामिति नास्ति पदभावोऽपि प्रागेव तु वाक्यभावः।[3]

आचार्यौदुम्बरायणस्य मते वर्णानाम् अनित्यत्वे शब्दानां नामाख्यातोपसर्गनिपातभेदा नोपपद्यन्ते, यतः परम्परापेक्षयानेकवस्तूनां श्रवणकालावस्थित एव द्वित्वादिसंख्या प्रवर्तते। शब्दस्य पदस्योच्चारणानन्तरं विनाशः, तदा पदस्य शब्दस्य वैकस्मिन् समयेऽवस्थितिर्न सम्भाव्यते। परस्परानपेक्षाणां सम्बन्धो न भवितुमर्हति। तथा च पदादिभेदेन शब्दचतुष्टयकथनं तु सर्वथा व्यर्थमेव।[4]

वचनशब्दस्य वाक्यार्थत्वेऽप्यनुपपत्तिर्दुष्परिहारैव, यतो वाक्यं वागिन्द्रियात् प्रच्युतं सद् विनष्टं भवति। वाक्यावयवभूतं पदं विनाशशीलमेव, अर्थादुत्पत्तिपरक्षण एव विनाशं

१. निघण्टुः–१।१।२८।

२. यावदेव वक्तुर्वागिन्द्रिये श्रोतुश्च श्रोत्रिन्द्रिये वचनम्, तावदेव तदस्तीति शक्यते वक्तुम्, प्रच्युतश्च नास्ति।—दुर्गा० १।१।१।१८।

३. नि० वि० १।१ ऋक् १८।

४. कृतकश्चोच्चारितप्रध्वंसित्वाद् न कालान्तरमवतिष्ठते। अतः शब्दानां नास्ति यौगपद्यम्। युगपदवस्थितानेकार्थविषया चतुष्ट्वसंख्या नैकस्मिन् वस्तुनि द्वित्वादिसंख्यानां सर्वासां प्रवृत्तिः, अतश्चत्वारि पदजातानीति यदुक्तं पदचतुष्ट्वम्, तन्नोपपद्यते।—स्कन्दस्वामी १।१।२।१।

गच्छति ।[१] यद्धि पदम् इदानीमेवोच्चारितं तद् अविनष्टमिति स्वीक्रियते । यस्य पदस्य पूर्वमुच्चारणं तस्य विनाशः स्वीकरणीय एव । विनष्टाविनष्टयोः सह परिसंख्यानमेकत्र गणना वा न युक्तिसहा ।[२]

यदि वचनशब्दार्थे वर्णः, तदाप्यनुपपत्तिर्न समाहिता भवति । वर्णसमूहे पदव्यवहारः, तथा च वर्णसमवायानामेकदा एकत्र सङ्घटनं न सम्भवति । यत एकवर्णोच्चारणानन्तरं यदा द्वितीयवर्णोच्चारणं क्रियते, तदा पूर्ववर्णविनाशः संजायते । तथा च वर्णद्वयस्य समकालमवस्थानाभावात् पदभावो न सिद्ध्यति । महाभाष्येऽप्युक्तम् —'नहि वर्णानां पौर्वापर्यमस्ति, किं कारणम् ? एकवर्णवृत्तित्वाद् वाचः उच्चरितप्रध्वंसित्वाच्च वर्णानाम् । एकैकवर्णवर्तिनी वाग् न द्वौ युगपद् उच्चारयति । गौरिति गकारे यावद् वाग् वर्तते नौकारे न विसर्जनीये, यावदौकारे न गकारे न विसर्जनीये, यावद् विसर्जनीये न गकारे नौकारे उच्चरितप्रध्वंसित्वात् । उच्चरितप्रध्वंसिताः खल्वमी वर्णाः । उच्चरितः प्रध्वस्तः, अथापरः प्रयुज्यते न वर्णो वर्णस्य सहायः' इति ।

वचनानामिन्द्रियनित्यतानिबन्धनाद् भिन्ने काल उत्पन्नत्वात् तयोः परस्परसम्बन्धो गुणप्रधानभावो न भवितुमर्हति । उक्तं नामाख्यातयोः प्रयोगे आख्यातस्य प्राधान्यम्, नाम्नश्च गौणत्वमिति । मीमांसका वैयाकरणाश्च भावस्य प्राधान्यं वाक्ये स्वीकुर्वन्ति । एकस्मिन् काले नोत्पद्यते चोभयम्, पूर्वपदोच्चारणानन्तरमपरपदोच्चारणकाले उच्चारितपदस्यापेक्षैव नास्ति, विनष्टत्वात् । यदि पूर्वं नाम्न उच्चारणम्, अनन्तरमाख्यातस्य, तदा परस्परतुलनायां नाम विनष्टम् आख्यातं चाविनष्टम् । एवमेवाख्यातस्य पूर्वोच्चारणे नाम्नोऽनन्तरोच्चारणम्, तदाऽऽख्यातं विनष्टं नाम चाविनष्टम् । अस्यां दशायामाख्यातस्य प्राधान्यं नामापेक्षया, एवमाख्यातापेक्षया नाम्नोऽप्राधान्यम्, एतत्कथनं नैव समीचीनतामर्हति, विनष्टाविनष्टयोः प्रधानाप्रधानभावकल्पना दुर्घटा । उक्तं दुर्गाचार्येण—'नहि विनष्टं नाम गुणभावमीयादाख्याते । नापि नष्टमाख्यातं प्रधानभावमीयान्नाम्नि ।' नहि विनष्टाविनष्टयोरितेरतरगुणप्रधानभावोऽस्ति । किञ्चेन्द्रियनित्यवचनत्वे व्याकरणशास्त्रविहित उपसर्गेण सह धातोः, धातुना सह प्रत्ययस्य संयोगो न सिद्ध्यति, यतः संयोगार्थमुभय : समस्थितिरपेक्षिता । अयुगपदुच्चारितानामेककालावच्छेदेन संयोगो न सम्भवति । उक्तं दुर्गाचार्येण[४]—'अयुगपदुत्पत्तौ हि सत्यां धातुरुच्चारितः, विनष्टः स कथम् ? उपसर्गेण सह योक्ष्यते प्रत्ययेन वा । न हि विनष्टाविनष्टयोर्योगोऽस्तु' इति ।

यास्काचार्यः पूर्वोक्तं पूर्वपक्षं निरस्य सिद्धान्तपक्षमित्थं प्रदर्शितवान्—'शब्दः' अर्थश्च मनुष्यबुद्धिस्थः । यदा कथमपि शब्दं मनुष्य उच्चारयति, तदा तद्बुद्धावेतन्निश्चितमस्ति—

---

१. वाक्यं समस्तमुद्भूतं तदिन्द्रिये नावतिष्ठते, यदवयवभूतानि पदान्यवस्थितानि शक्यानि परिसंख्यातुम् ।—दु० १।१।२।२ ।

२. न च विनष्टाविनष्टयोः पदयोः सह परिसंख्यानमस्ति । दु० १।१।२।३ ।

३. महाभाष्यम् ।

४. तत्र चतुष्ट्वं नोपपद्यते, अयुगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः शास्त्रकृतो योगश्च । —नि० १।१।१ -३ ।

एतस्माच्छब्दादिममर्थं बोधयितुमिच्छामि, श्रोताऽप्यात्मबुद्धावनगच्छति यद् यं शब्दः, एतस्य शब्दस्यायमर्थः। तथा च शब्दो वक्तुरुच्चारयितुश्च बुद्धिं व्याप्नोति। एतद्वशादेव श्रोता बुद्ध्या जानाति यद् वक्ता एकस्यार्थबोधकस्य शब्दस्योच्चारणं कृतवान्, अयं च तस्यार्थः। एतद्दृष्ट्यैव निरुक्ते उक्तं यद् व्याप्तिमान् शब्दः। व्याप्तिमत्ताया अभावे शब्दोच्चारणमर्थबोधश्च न सम्भवति। अयम् अनवस्थितः, अस्थिरः शब्दो बुद्धिं व्याप्तुं न शक्नोति। उच्चारणपरक्षण एव श्रोतुर्बुद्धिस्थशब्देन सह सम्बन्धं कृत्वा विनष्टोऽपि संस्काररूपेण बुद्धौ सन्तिष्ठत इति स्मृतिः सम्भवति। स्मृतिपूर्वकमेव परिसंख्यानं शब्दस्य चतुर्धा विभागश्चोपपद्यते। विनष्टाविनष्टयोः सह परिसंख्यानमेकत्र गणना न संगच्छते—इयमप्यापत्तिर्न समीचीना, यतो मूर्तिमतः स्थूलशब्दस्य यस्याभिव्यक्तिः, स एव विनष्टः परं शब्दस्याकृतिः, अर्थाच्छब्दस्य शब्दत्वं न नश्यति, अपि तु बुद्धिस्थः स शब्दस्तिष्ठति। सह परिसंख्यानं बुद्धाववस्थितस्य शब्दस्य भवति, तस्यैव चोच्चारिते शब्द आरोपो जायते। मानवबुद्धिरेव शब्दाकारे परिणता जायते। तथा च प्रधानभावव्यवस्था मुख्यनया स्थूलेऽभिव्यक्ते वा शब्दे नास्ति, अपि तु नामाख्यातरूपयोर्बुद्ध्योरेव। स्थूलेऽभिव्यक्ते च नामाख्यातरूपात्मके शब्देऽसावारोपितो भवति। तथा च बुद्धिस्थप्रधानाप्रधानभावावस्था स्थूलशब्दयोरारोपितो भवति।

यास्केन स्पष्टमुद्घोषितं यच्छब्दार्थज्ञाने शब्दस्य व्याप्तिमत्त्वं कारणम्। यद्यपीङ्गितेनाक्षिसंकोचादिना चार्थप्रतीतिर्भवति, किन्त्वर्थज्ञानं प्रति व्याप्तिमत्त्वस्य कारणत्वस्वीकारे शब्दादिवदभिनयेऽपि बुद्धिव्याप्तिरस्ति। पूर्वोक्तक्रियया गमनागमनादेशप्राप्तिः, कस्यापि वस्तुन आदानं प्रदानम्, अर्थादिकं वाऽभिव्यज्यत इत्येतत् प्रत्यक्षसिद्धम्। किन्तु शब्दात्मकप्रयोगं विना यदि कार्यं निर्वहेत्, तदा भाषायाः प्रयोजनमेव न स्यात्। किञ्च मनोगतभावराशेः प्रकाशार्थं भाषैव समीचीनः पन्थाः। अभिनयेऽपि पूर्वविज्ञातवस्तुनः प्रकाशनार्थं व्याप्तिमत्ता वर्तत एव, किन्तु शब्दापेक्षया तत्र सारल्यं नास्ति। यतो निस्सन्दिग्धभावेनार्थप्रतीतिर्नानेन जायते। अतः शब्द एव अर्थप्रकाशने समीचीनः पन्थाः।

इदानीमेष सन्देहः स्वाभाविको यच्छब्दो नित्यः, सर्वदा सर्वत्र तदवस्थितिर्जायते, तदा कस्मान्न सदा तदुपलब्धिः? अत्र स्कन्दस्वामी कथयति—'व्याप्तिमत्त्वाद् अणीयस्त्वाच्च तथा न भवति। यो हि व्याप्तिमान् अतिसूक्ष्मतमश्च तस्योपलब्धिरभिव्यञ्जककारणाभावे न सम्भवति। गवादीनां पदार्थानां जातिः सर्वत्र तिष्ठते, परन्तु तदभिव्यक्तिर्व्यक्त्या भवति। व्यक्त्यभावे आकृतेरुपलब्धिर्न सम्भवति। एवमेव शब्दोऽपि सदा सर्वत्र वर्तते। किन्तु यदोच्चारणेन तदभिव्यक्तिर्न भवति, तदोपलब्धिर्न भवति। उपलब्ध्यभिव्यञ्जककारणस्य सद्भाव एव शब्दोपलब्धिर्जायते। शब्दः सूक्ष्मतमः, यत आकाशस्य सूक्ष्मतमत्वं तद्गुणश्च शब्दः, तस्माच्छब्दोऽपि सूक्ष्मतमः सूर्यकिरणरूपाभिव्यञ्जककारणाभावे शब्दोपलब्धिर्न भवति, तथैव ताल्वादिव्यापाररूपाभिव्यञ्जककारणाभावे रूपोपलब्धिर्न भवति। व्यवहारसिद्ध्यर्थं यज्ञदत्तादिसंज्ञाकरणम्, वाक्येन विवक्षितार्थप्रतिपादनादिकञ्च सर्वमपि शब्दनित्यत्व एव संघटते। एतेन व्यवहारसिद्ध्यर्थं शब्दार्थप्रतीतिः प्रतिपादिता।

**मीमांसकानां मते शब्दार्थविचारः**

सृष्टिकालादेव जगति भावाभिव्यक्तिर्लोकयात्रानिर्वाहायापेक्षिता। अपौरुषेयवाक्यभूतवेदादेव शब्देनार्थप्रकाशनं जायते। कश्च शब्दार्थयोः सम्बन्ध इत्येव दार्शनिकानां भाषातत्त्व-

११

विदाञ्च विवेचनीयो विषयः। यास्कविरचितनिरुक्तादेः शब्दविषयेऽर्थावबोधाय च शास्त्रीयविवेचनमुपलभ्यते।

परमर्षिर्जैमिनिः शब्दार्थसम्बन्धविषय उक्तं यत् स्वाभाविकोऽनयोस्सम्बन्धः, औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, उत्पत्तिशब्दस्य लक्षणया स्वभावोऽर्थो भवति। तथा चौत्पत्तिकशब्दार्थः स्वाभाविक इति। वाचकः शब्दः, वाच्यश्चार्थो नित्य एवेत्युभयोस्सम्बन्धोऽपि नित्य एव स्यात्।

**अयमाशयः**—स्वभावस्य नित्यत्वे सम्बन्धोऽपि स्वाभाविकः, अकृतः, अपौरुषेय इति। शब्दार्थं एव सम्बन्धः संज्ञासंज्ञिसम्बन्धः, वाच्यवाचकसम्बन्धो वा। अत्रेयं जिज्ञासा यदि सम्बन्धो नित्यः, तदाऽनभिज्ञपुरुषस्याप्यर्थबोधः स्यादेव। अर्थात् प्रथमशब्दश्रवणानन्तरमेवार्थबोधो दुर्निवारः स्यात्, न चासौ सम्भवति। अव्युत्पन्नानामनभिज्ञानादादावर्थबोधो न भवतीति सम्बन्धः कल्पित एव स्वीकरणीयः। यत एतस्य शब्दस्य अयमर्थ इति यावन्नोच्यते, न भवति तावदर्थबोधः। अतः सम्बन्धः पुरुषकृतः कल्पनीयः। शब्दोऽर्थश्च सर्वथा भिन्नरूपेण व्यपदेश्यो भवतीति का कथा उभयोः स्वाभाविकसम्बन्धस्य ? लोके अयं शब्दः, अर्थो न; अयमर्थः, शब्दो न—अनेन रूपेण शब्दार्थयोर्भेदव्यवहारः सर्वथा सुस्पष्टः। शब्दोऽर्थश्च स्वाभाविकसम्बन्धविहीनः। अत एव तूभयोरेकदेशवर्तित्वं नास्ति। येषामभेदः, तयोः सामानाधिकरण्यं समानरूपत्वञ्च जायते। यस्य शब्दस्यास्माभिः श्रवणं क्रियते, असौ शब्द उच्चारयितुर्मुखे तिष्ठति तद् वाच्यश्चार्थो भूम्यादिविभिन्नस्थानेषु तिष्ठति। घट इत्यादिशब्दानामुच्चारणं क्रियते, न च तत्रावयवार्थप्रतीतिरिति। एतेन शब्देन कम्बुग्रीवादिविशिष्टस्यार्थस्योपलब्धिर्भवति। असौऽर्थः साकारः, सुतरां शब्दोऽर्थश्च न समानदेशवर्ती, न वा समानकालविशिष्ट इति स्वीकरणीयमत्यन्तभिन्न एवमेवैतयोः। स्वभावतो भिन्नानां पदार्थानां हि सम्बन्धः पुरुषबुद्धिघटितो भवति। एतस्यां दशायां को नाम शब्दार्थसम्बन्धस्यानित्यतां निवारयितुं क्षमते ? यथा रज्जुः कलशाद् अत्यन्तं पृथगिति। अतः कलशेन सह रज्ज्वा य आबन्धनात्मकः सम्बन्धः स सम्बन्धः केनापि सम्पादितः। अतः सब्दार्थसम्बन्धो न स्वाभाविकः, अपि तु केनापि निष्पादित एव। एष एव प्रश्नो भाषाविदां मूलाधारभूतः। इममेव प्रश्नं समाधातुं भाषाविज्ञानविचारपरम्परा प्रचलिता। अत एव मीमांसकाः सम्बन्धस्य स्वाभाविकत्वमाकलय्य शब्दार्थविचारमन्यसिद्धान्तखण्डनपुरस्सरमुपस्थापयन्ति।

ते कथयन्ति यत् सम्बन्धस्य कल्पितत्वे एकः कश्चित् कर्ता कल्पयिता वाऽवश्यं भवेत्; किन्तु वेदस्यापौरुषेयत्वाद् वैदिकपदपदार्थसम्बन्धकर्ता कश्चिन्नास्तीत्यवश्यमेवाभिमन्तव्यम्। प्रत्यक्षप्रमाणेन न सिद्ध्यति, कश्चिद् वैदिकपदपदार्थसम्बन्धकर्ता, अन्येषां प्रमाणानां च प्रत्यक्षमूलकत्वादेतत्साधकमन्यदपि प्रमाणं नास्तीति स्वीकर्तव्यमेव। सम्प्रति सम्बन्धकर्ता मा भवतु प्रत्यक्षग्राह्यः, किन्त्वतीते समय आसीत् कश्चित् सम्बन्धकर्ता यस्य प्रत्यक्षागोचर इति नास्ति काप्यनुपपत्तिः। परं यदि कश्चित् कर्ताऽतीते काल आसीदिति मन्यते, तदा तत्स्मरणमधुना सर्वेषां कस्मान्न भवति ? वैदिकपदपदार्थसम्बन्धकर्तुः कस्यापि स्मरणं न केनापि क्रियत इति त्ववितथं वचः। अत्रैतदपि वक्तुं शक्यते यत् सुदूरपूर्वकाले सम्बन्धकर्ता कश्चिदासीत् प्रत्यक्षत उपलब्धः, किन्त्विदानीं नासौ स्मर्यते। दृश्यते लोकेऽप्यधिककालव्यवधाने कूपा-

पवनादिदर्शनानन्तरमपि तत्कर्ता स्मृतिपथं नायाति। अत्र त्विदमपि वक्तुं शक्यते, नात्र कालाधिक्यं स्मरणाभावे कारणम्, अपि तु कुलोत्सादनं देशोत्सादनं वा स्मरणाभावे कारणम्। स्मरणपरम्पराया अभावेऽपि वस्तूनां स्थितिः भवति, यदि तत्र कोऽप्यन्यः पुरुष आगत्य स्थानङ्करोति, तदा पूर्वतोऽवस्थितमपि तत् कूपादिकं पारम्पर्यव्यवहारलोपाद् नवीनां कामपि व्यवहारपरम्परामाधत्ते।

शब्दार्थव्यवहारे च नैषः क्रमः सम्भवति, यतो गुरुशिष्यपरम्पराक्रमेण वैदिकशब्दार्थसम्बन्धस्य परम्परा नेदानीं परिभ्रष्टा, गुरुशिष्यसम्प्रदायाविच्छेदात्। प्राकृतिकविपर्ययसङ्घटनया न काऽपि बाधा, न कोऽपि विच्छेदः; किन्तु नैको गुरुशिष्यसम्प्रदायः, अपि तु बहुत्र बहवः पुरुषा विभिन्नगुरुशिष्यसम्प्रदायमनुसरन्ति। यदि कश्चित् सम्प्रदायः स्यान्नाम, परञ्च स्मरणाभावाद् नास्ति सम्बन्धकर्तुः कश्चिद् निर्देश इत्यवश्यमेव मन्तव्यम्। अत्रेदमवगन्तव्यं यद् घटपटादिभिः सर्वे व्यवहारं कुर्वन्ति। किन्तु व्यवहारवेलायां कुम्भकारस्य नाम न स्मरन्ति, निष्प्रयोजनत्वाद् व्यवहारासाधकत्वात्, व्यर्थं तन्नामस्मरणमिति। एवमेव शब्दार्थव्यवहारे यदा विनापि स्मरणं कार्यं चलति, तदा किं प्रयोजनं तन्नामस्मरणस्य ? पदपदार्थसम्बन्धमादाय व्यवहार निर्वाह एव प्रयोजनम्। तत्सम्बन्धकर्तुः प्रथमपुरुषस्य स्मरणं विनापि व्यवहारनिर्वाहाद् न भवति स्मरणम्।

वस्तुत एतत्कथनं न समीचीनतामर्हति। वैदिकपदपदार्थकर्तुः पुरुषस्याप्तत्वमवगत्यैव व्यवहारः परिचलति, अन्यथाऽसम्भव एव। यत आप्तत्वनिर्धारणाय वैदिकपदपदार्थसङ्केतकर्तुरवधारणमावश्यकम्। आप्तत्वावधारणं विना वैदिकवाक्यार्थावधारणं तत्तात्पर्यावधारणं च न भवितुमर्हति। फलतो वैदिककर्मणि केषामपि नैव प्रवृत्तिः स्यात्। यथा पाणिनेः परिचयं तच्छास्त्रीयसङ्केतं विना च वृद्धिर्यस्याचामादेरित्यादिसूत्रप्रयुक्तस्य वृद्धिशब्दस्यार्थाज्ञानाद् व्यवहारो न भवितुमर्हति। अतो वैदिकपदपदार्थसङ्केतप्रवर्तकस्य ज्ञानं न निष्प्रयोजनम्, यतः पुरुषविशेषस्याप्तत्वे भ्रमप्रमादरहितत्व एव विश्वस्तः सल्लोकः कष्टसाध्ये कर्मणि प्रवृत्तः स्यात्। अतो वैदिकशब्दार्थव्यवहारे तत्कर्तुः परिचय आवश्यकः।

मीमांसकमते शब्दार्थग्रहणप्रकारोऽन्यथैव निरूपितः। एकोऽपभाषाप्रयोगकर्ता प्राकृतजनः, अपर आर्यः, यस्मिन्नर्थे उभयोर्वैषम्यं दृश्यते, तत्र कस्य प्राधान्यमिति विवेचनायामार्यम्लेच्छा अपि कारणम्। वेतसशब्दे, पील्वादिशब्दे चार्याणां भिन्नैव प्रसिद्धिः। आर्या हि यथाक्रमं दीर्घशूके शूकरे वञ्जुलाख्यवृक्षविशेषरूपेऽर्थे प्रयोगं कुर्वन्ति। प्राकृता जना यथाक्रमं प्रियङ्गौ कृष्णपक्षिविशेषे जम्बुवृक्ष एव हस्त्याद्यर्थे च व्यवहारं कुर्वन्ति। अत्र कस्य प्राधान्यं कस्य चाप्राधान्यमिति निर्णयार्थं किमपि कारणं नोपलभ्यते। यतोऽर्थबोध एव शब्दस्य प्रयोजनम्। एतत् प्रयोजनं न प्रयोगादेव सिद्ध्यति। अतः समबलवत्त्वमेवेति अर्थद्वयस्य ग्रहणं प्राप्तम्। एतस्या आशंकाया विचार आर्याणां प्रसिद्धिर्बलवती। यतो यदि लौकिकार्थबोध एव शब्दप्रयोगस्य प्रयोजनं स्यात्, तदाऽऽर्यस्यानार्यस्य च प्रयोगे न किमपि वैशिष्ट्यम्; किन्तु निगमनिरुक्तादिद्वारा यादृशस्यार्थस्यावगतिर्भवति, तत्र यदि कश्चिद् विप्लवः स्यात्, तर्हि धर्महानिः स्यात्। अत आर्यप्रसिद्धिर्बलवती। एकार्थाधिकार्थस्वीकारे विकल्पप्रसङ्गः प्राप्नोति। विकल्पश्चाष्टदोषग्रस्तः। यत्र गतिर्नास्ति तत्र तु नानार्थकत्वं स्वीकरणीयमेव; किन्तु यत्रानेकार्थत्व-

स्वीकृतं विनापि कार्यं सिद्धयति, तत्र त्वनेकार्थत्वस्वीकारोऽपि वृथैव। अतो यवादीनामर्था आर्यप्रसिद्धयनुकूला स्वीकरणीयाः।

अत्र पुनरप्यर्थनिर्णयाय जिज्ञासां करोति यद् वेदादिशास्त्रे सन्ति एवंभूताः शब्दा येषां अर्था आर्यदृष्ट्या नैव प्रसिद्धाः। यथा पिकशब्दः, ताम्रशब्दः, क्लोमशब्दादयश्च। म्लेच्छा ह्येतेषां शब्दानां यथाक्रमं कोकिले पद्मे देहान्तरावयवविशेषरूपेऽर्थे प्रयोगं स्वीकुर्वन्ति। इदानीमेतच्छब्दविषये किं करणीयम्? आर्याणां प्रसिद्धिर्नास्तीत्येव। अतो विरोधावसर एव नास्ति। तत्र म्लेच्छदृष्टया प्रसिद्धोऽर्थ एवादरणीयः, न तु निरुक्तवशात् कश्चिदन्योऽर्थः कल्पनीयः। यतो यौगिकार्थापेक्षया रूढिर्बलवती भवति। किञ्च निरुक्तेनैकस्यैव शब्दस्यानेकेऽर्थाः सम्भवन्तीत्युक्तम्। पुनरप्यव्यवस्था प्राप्नोति। किं चार्यापेक्षया पशुपक्ष्यादिपालने वृक्षादिसंवर्धने ते कुशलाः सन्ति। अतोऽनार्यप्रसिद्धिरेव पिकाद्यर्थविषये बलवतीति। अतो वेदमीमांसायामपि शब्दार्थनिर्धारणे व्यवहार एव कारणम्। न्यायमुक्तावल्यामप्येष विचारः कृतः। तद्यथा— 'यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः कङ्गौ च म्लेच्छानाम्। तत्र हि 'यदान्या औषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति—

वसन्ते सर्वशस्यानां जायते पत्रशातनम्।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥ इति।

वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात् प्रयोगो नानाशक्तिकल्पने गौरवात्। हर्यादिपदे तु विनिगमकाभावान्नानाशक्तिकल्पनम्[1]'।

प्रसङ्गतो मीमांसकानां प्रसिद्धस्याभिहितान्वयवादस्यान्विताभिधानवादस्य च सङ्क्षेपतो दिग्दर्शनमस्माभिः क्रियते। तत्राभिहितान्वयवादिनो भाट्टा मीमांसकाः। अभिहितानां पदार्थानामन्वयस्तस्य वादिनस्ते। पदैरभिहिताः पदार्थास्तात्पर्यवशाल्लक्षणया स्वान्वयमनुभावयन्ति। अतोऽत्र तावदपदार्थो वाक्यार्थः। अस्मिन् मते पदात् पदार्थबोधः, पदार्थात् वाक्यार्थबोधस्तु तात्पर्यवशाल्लक्षणयेति बोद्धव्यम्।

अन्विताभिधानवादिनस्तु प्राभाकरा मीमांसकाः। अन्वितानां पदार्थानामभिधानम् अन्वितैः पदैरिति शेषः, तद्वादिनस्ते। अत्र पदान्येवान्वितार्थस्याभिधायकानि। अतो नापदार्थो वाक्यार्थः। प्रथमं पदार्थाः साहचर्येण पदैः स्मार्यन्ते। तत्र न काऽपि शक्तिरपेक्षिता। पदान्येव स्वरूपसत्याऽभिधापरनाम्न्या शक्त्याऽन्वयमाकाङ्क्षादिसहकारेणाभिदधति। इयं चैकेवाभिधात्री शक्तिरन्वयबोधने व्याप्रियते। तत्र च न शक्त्यन्तरमपेक्ष्यते।

अत्र प्राचीननैयायिकमतं तु जयन्तभट्टेन न्यायमञ्जर्यामित्थं प्रतिपादितम्— पदानां द्वे शक्ती। एकाऽभिधात्री पदार्थप्रतिपादनपर्यवसायिनी, द्वितीया च स्वरूपसती अभिहितानां पदार्थानामन्वयमाकाङ्क्षादिसहकारेण प्रतिपादयति। इयं च शक्तिस्तात्पर्यवृत्तिरिति जयन्तभट्टेनाभिहिता[2]।

---

१. न्यामु० पृ० ३०७–३०८; २. प्रमाणप्रकरणम्, पृ० ३७०–३७२।

नव्यास्तु गङ्गेशवर्धमानादय इममेव वादमङ्गीकुर्वन्ति; परन्त्वन्वयबोधिका शक्तिः संसर्गमर्यादेति नाम्ना व्यपदिश्यते। संसर्गमर्यादेति प्रमाणस्यैव पर्यायः। तथा च संसर्गबोधकं प्रमाणं संसर्गमर्यादेति पर्यवसन्नं भवति। सा च संसर्गमर्यादा पदनिष्ठैव। अभिधात्री शक्तिः पदार्थे व्याप्रियमाणा ज्ञातैवोपयुज्यते। सा च सङ्केतस्मरणाद् अव्यतिरिक्तैव। द्वितीया च संसर्गबोधिका न पूर्वं ज्ञानमपेक्षते। अत एव नवीनकविरचितेषु वाक्येषु संसर्गबोधो न दुरुपपादः। सङ्केतज्ञानवतां पदार्थप्रतिपत्तेरनन्तरमन्यवबोधः स्वरूपसत्या शक्त्या समुल्लास्यते।

अधुना तावद् अभिहितान्वयवादिनां भाट्टानां मतं परीक्ष्यते—

पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि।
अथेदानीमर्था अवगता वाक्यार्थं सम्पादयन्ति॥

इति शबरभाष्यमङ्कितमुपजीव्य भाट्टानां मतमेतत् समुल्लसति। पदानां जातावेव शक्तिः। व्यक्तिस्तु लक्षणया प्रतिपाद्यते। तथा चोक्तम्—

जातेरस्तित्वनास्तित्वे न हि कश्चिद् विवक्षति।
नित्यत्वाल्लक्षणीया या व्यक्तेस्तेहि विशेषणे[1] ॥ इति।

**न्यायमते शब्दार्थविचारः**

आचार्यगौतमो न्यायदर्शने सविस्तृतिं शब्दार्थयोस्तत्सम्बन्धस्य च परीक्षा कृता। तत्र कः पदार्थ इति चिन्तायां न व्यक्तिमात्रम्, न वा जातिमात्रम्, न वाऽऽकृतिमात्रं पदार्थो भवितुमर्हति। तैरुक्तम्—'व्यक्त्याकृतिजातयस्तु पदार्थः'[2] इति। अर्थाद् व्यक्त्याकृतिजातयः समस्त एव पदार्थः। गोशब्दोच्चारणानन्तरमेकदैव शक्तिज्ञानवतां पुरुषाणां व्यक्त्याकृतिजातयः प्रतीयन्ते। शाब्दबोधविषयेषु त्रयाणामेव भानं भवति, अतस्त्रयः पदार्थाः। जगदीशभट्टाचार्यैः स्वशब्दशक्तिप्रकाशिकाख्ये ग्रन्थे प्राचीननैयायिकमतमुद्धृत्योक्तं यद् व्यक्त्याकृतिजातयो गोशब्दार्थो न कृतः, अपि तु पदार्थं इति प्रयुक्तः। अतो यदि व्यक्त्यादिषु भिन्नो भिन्नः सङ्केतः स्यात्, तदा कदाचिद् गोव्यक्तेः, कदाचित् तदाकृतेः, जातेर्वा बोधः स्यात्, किन्तु तादृशो बोधो न कदापि केषामपि भवतीति। अतः त्रिषु भिन्नरूपेण शक्तिर्नास्ति। गदाधरभट्टाचार्योऽपि जात्याकृतिविशिष्टगोव्यक्तौ गोशब्दस्यैकैव शक्तिः। अत्राकृतिशब्देन सम्बन्धस्य निर्देशो भवति।

नैयायिकमते शब्दार्थविवेचनायामुक्तं यत् स्वर्गादयोऽनेके पदार्थाः सन्ति। येषां पदार्थानां प्रत्यक्षज्ञानं नास्ति, तेषामप्याप्तवाक्यत्वनिबन्धनम् अर्थज्ञानं भवति। अनाप्तवाक्ये प्रयोगे तेन यथार्थज्ञानं न जायते। आप्तवाक्येन पदार्थस्य यथार्थबोधे जाते शब्दार्थज्ञानं जायते। शब्दार्थयोर्वाच्यवाचकभावः सम्बन्धः। वाच्यवाचकभावसम्बन्धो व्याप्त्यात्मको नास्ति। यदि शब्दार्थयोस्तादात्म्यसम्बन्धः, प्रतिपाद्य-प्रतिपादकभावसम्बन्धः, प्राप्तिसम्बन्धो वा न भवति, शब्दादर्थबोधे सङ्केतप्रयुक्त एव, अतः सम्बन्धप्रयुक्तो न शब्दार्थबोधः, अपि तु सङ्केतप्रयुक्तः। अर्थनियमविषये नियोग एव समयः, अर्थादेतस्य शब्दस्य अयमर्थो वाच्यः, एतादृशो यो नियम एतस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारको नियोग एव सङ्केतः, यमर्थं एतस्य शब्दस्य वाच्यः, अनेन वाक्येन वाच्यवाचकसम्बन्धावगतिर्भवति। अयमेव सङ्केतो वा।

---

१ श्लोकवार्तिके—१।१।३११;   २. न्यायसूत्रम्—२।२।६६।

शब्दः अर्थश्च विभिन्नस्थाने तिष्ठतः सङ्केतज्ञानशून्यस्य जनस्य शब्दश्रवणानन्तरमपि न भवत्यर्थबोधः। मीमांसका वैयाकरणाश्च शब्दार्थयोः स्वाभाविकं सम्बन्धं स्वीकुर्वन्ति। तैरपि एष सङ्केतः स्वीकरणीय एव। सकलार्थैः सह सर्वेषां शब्दानां स्वाभाविकः सम्बन्धो न भवितुमर्हति। यतस्तथा सति शब्दार्थबोधव्यवस्था नियमोत्पत्तिर्वा न स्यात्। अतोऽर्थविशेषेण सह शब्दविशेषस्य स्वाभाविकः सम्बन्धः स्वीकरणीय एव। अगत्याऽस्माच्छब्दादयमर्थो बोद्धव्यः, अयं शब्द इममर्थं बोधयतु, एतादृशसङ्केत एव सम्बन्धबोधोपायः।

अत्र भाषाविज्ञानदृष्ट्या एतादृशी जिज्ञासा स्वाभाविकी यदेतस्य शब्दसङ्केतस्य ज्ञानं कथमिव स्यात्, अर्थात् केनोपायेन शब्दसङ्केतोऽवगन्तव्यः? यदि केनापि शब्देन सह स्वाभाविकः सम्बन्धो नास्ति, तदा कथमज्ञा लौकिकाः सङ्केतमवगन्तुं शक्नुवन्ति? अतो नैयायिकदृष्ट्याऽपि वृद्धव्यवहार एव शरणम्। वृद्धव्यवहारवशाद् एव बालकानामज्ञानां सङ्केतज्ञानं जायते। व्यवहारादर्थज्ञानं तु शक्तिग्रहविचारवेलायां निरुच्यत इतीह विरम्यते।

अत्र **वाचस्पतिमिश्रः** कथयति—'शब्दार्थयोर्यदि नास्ति स्वाभाविकः सम्बन्धः, तदा कथं वक्तुं शक्यते यदस्माच्छब्दादयमर्थो बोद्धव्य इति। यतोऽर्थविशेषं निर्दिश्य एवैतदुच्यते। सङ्केतात् पूर्वमकृतसङ्केतः शब्द इति पूर्वोक्तनिर्देशो न सम्भवति। अतोऽकामेनापि स्वाभाविकः सम्बन्धः स्वीकरणीय एव। शब्दार्थयोः स्वाभाविकसम्बन्धमादाय शब्दसङ्केत एतन्निर्युक्तिकम्, यतोऽधुनापि त्वर्थविशेष आधुनिकसङ्केते रूपपरिभाषा भवति। न च तत्र स्वाभाविकः सम्बन्धः। सङ्केतकर्ता सम्बन्धविषये स्वतन्त्रः। असौ स्वेच्छयाऽर्थविशेषं निर्दिश्य शब्दविषये सङ्केतं कर्तुं शक्नोति। अत इदानीन्तनानां जनानां कृते वृद्धव्यवहार एव सङ्केतज्ञानोपायः। अयमाशयः स्वाभिप्रायप्रकाशनाय सङ्केतार्थंकृतः। सोऽधुना वृद्धव्यवहारे प्रयुज्यमानानां शब्दानामविदितसंगतिभिरपि बालकैः शक्योपग्रहीतुम्। तथा वृद्धवचनानन्तरं तच्छ्राविणो वृद्धान्तरस्य प्रवृत्तिनिवृत्तिभयशोकहर्षादिप्रतिपत्तिस्तद्धेतुं प्रत्ययमनुमिमिते बालः'[1] इति।

संसारेऽनादिकालाद् व्यवहारपरम्परा चलति, सुतरामनादिकालादेव संकेतज्ञानमपि चलति। आचार्य उदयनो न्यायकुसुमाञ्जलौ सङ्केतज्ञानप्रकारमेवं निर्दिशति—'किञ्च सृष्ट्यारम्भे न वृद्धः, न युवा, नापि बालक इति शब्दशक्तिज्ञानमसम्भवमेव। यतः शब्दश्रवणानन्तरमावापोद्वापाभ्यां बालकस्य प्रथमं शक्तिग्रहो भवति। यथा कोऽपि वृद्धः कमपि पुरुषं कथयति यद् घटमानय, युवा घटमानयति। बालकः शब्दं श्रुतवान्, आनयनव्यापारञ्चावलोकितवान् (अयमेव आवापः); किन्त्वेतद्वाक्यश्रवणानन्तरमपि बालको नावगच्छति यद् घटशब्दार्थः कः, अनन्तरं वृद्धो युवानं प्रति कथयति घटं नय, बालक इमं शब्दमपि श्रुतवान्, युवा घटं नीतवान् इत्यपि बालकेनावलोकितम् (अयमेव उद्वापः)। तथा च आवापोद्वापाभ्यां बालकोऽवगच्छति घटार्थः कम्बुग्रीवादिमान् घटो भवति। 'आनय'शब्दस्य अर्थ आनयनम्, अन्यथा नयशब्दोच्चारणानन्तरं कथमनेन नयनं कृतम्? अनेनैव प्रकारेण बालकस्यादौ सङ्केतग्रहो भवति।

---

१. तात्पर्यटीका—पृ० ८०।

सृष्ट्यारम्भे सर्वः शिशुरेव स्यात्, अतो यूनो वृद्धस्य चाभावात् शिशोः संकेतज्ञानं कथमिव स्यात् ? अत्राप्युक्तमाचार्येण परमकारुणिको भगवान् परस्परमनोभावाभिव्यक्त्यर्थं कमप्युपायं नैव प्रकाशयिष्यतीति न सम्भवति। असौ परमेश्वरो विश्वप्रपञ्चस्य सृष्टिं कृत्वा स्वयमेव वृद्धस्य बालस्य च स्वरूपं सन्धार्यावापोद्वापाभ्यां शब्देन सहार्थस्य नित्यसम्बन्धं कथयति।

**वैयाकरणैः** शक्तिविश्लेषणप्रसङ्गे उक्तं यद्यथेन्द्रियाणां चाक्षुषघटादिषु चाक्षुषादिकारणता सहजैव, तथैव शब्दानामप्यर्थैः सह बोधकारणत्वमनादिभूतं शक्तिः। अत्र नैयायिकानां प्रतिपत्तिर्यदाधुनिकसङ्केते स्वाभाविकोऽनादिसङ्केतो नास्ति। तथा च कथं तस्मादर्थबोधो भवति ? वैयाकरणानां मतेऽर्थादिजनकत्वं चित्रादिसङ्केतज्ञानाद् गृह्यते। अतस्तज्ज्ञानात् पूर्वं न भवत्यर्थबोधः। अत्रैतन्मते व्यवहारात् तत्रापि शक्तिग्रह उपपन्नो भवति। वैयाकरणो वाचस्पतिमतमुद्धृत्य स्वमतसमर्थनं करोति—

**सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः।**
**सङ्केतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्सङ्केतः**[1] ॥

पतञ्जलिनापि उक्तम्—**'सङ्केतस्तु पदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः, योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः'** इति[2]।

योगवाचस्पत्ये सर्वशब्दानां सर्वार्थाभिधानसामर्थ्यं प्रतिपादितम्। सर्वशब्दैः सर्वेषामर्थानां सम्बन्धः स्वाभाविकः। ईश्वरसङ्केतस्तु प्रकाशक एव। अत एवैतन्मते नित्यः शब्दः, नित्योऽर्थः, नित्यः सम्बन्धः। आकृतिनित्यत्वाद् नित्यः शब्द इति[3]। शब्दार्थवदेतयोः सम्बन्धोऽपि नित्य एव। यथा निरुक्ते बौद्धोऽर्थो व्याप्तिमत्त्वात्तु शब्दस्येत्यत्रोक्तम्, तथैवेहापि। अयं च सम्बन्धस्तादात्म्यरूपः। अत एव वाक्यपदीये उक्तम्—

**नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः।**
**सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः**[4] ॥ इति।

शब्दार्थयोस्तादात्म्यादेवार्थमशृणोत्, अर्थं वदतीत्यादिव्यवहार उपपद्यते। 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इत्यादिप्रयोगा अप्युपपद्यन्ते। तथा च बौद्ध एवार्थः। बौद्धार्थे च दाहात्मिका शक्तिर्नास्तीति वह्निशब्दोच्चारणे दाहो न जायते। अत एतन्मते शब्दोऽर्थः सम्बन्धश्च मीमांसासिद्धान्तवद् नित्य एव। अत एव भाष्यकृतोक्तं सिद्धे शब्दार्थसम्बन्धे।

व्याकरणेन चार्थज्ञानं जायते। अर्थज्ञानाय व्याकरणाध्ययनमावश्यकम्। अर्थमुपादाय लोके शब्दान् प्रयुञ्जते, न च तन्निर्माणार्थं कश्चिद् यत्नः क्रियते। यद्यनित्यः स्यात्, निर्वृत्तौ यत्नोऽपेक्षितः स्यात्, यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वा वदति कुरु घटम्, अनेन कार्यं करिष्यमीति। यदि अनित्यः स्यात्, शब्दनिष्पत्तयेऽपि यत्नः स्याद् एव। तस्मादनादि-

१. तात्पर्यटीका; २. तात्पर्यटीका; ३. वा० १।१।२१; ४. वा० १।२३।

वृद्धव्यवहारपरम्परा, व्युत्पत्तिपूर्वकः शब्दव्यवहार इति शब्दादीनां नित्यत्वं शब्दानुशासनमेव व्याकरणस्य प्रयोजनम् । अतो वैयाकरणमते त्रयाणामपि नित्यम् ।

वस्तुतो व्याकरणं भाषायाः कला विज्ञानं च[1] । व्याकरणं हि वर्णात्मकं व्याख्यात्मकं च तद्धितप्रयोगाणां विश्लेषणे लक्ष्यैकचक्षुष्का वैयाकरणा इत्यवगम्यते । पाणिनेः पूर्वमप्यासीद् व्यवहारदृष्टिमाश्रित्य व्याकरणनिर्माणम् । इदानीं वयं लक्षणैकचक्षुष्काः सञ्जाताः, किन्तु सूत्रनिर्माणम्, एवं भाष्यादिव्याख्यानं च व्यावहारिकप्रयोगानुरोधेनैव । अत एव पाणिनिना 'तदशिष्यं संज्ञाप्रमाणत्वात्'[2] इत्यनेन सूत्रेण व्यवहारसिद्धानां प्रयोगाणां निर्माणार्थं कृतानां प्राचीनसूत्राणां प्रत्याख्यानं कृतम् । अतो भाषाविज्ञानस्य व्याकरणनिरुक्तादिव्याख्यानमेव शब्दे, तस्य च व्याख्याने दार्शनिकसिद्धान्तसिद्धः प्रयोगश्च शरणम् । अतो दार्शनिकदृष्ट्यैवार्थो भवितुमर्हति, नान्यथेति । दार्शनिकदृष्ट्याऽर्थोऽर्थानुसन्धानस्य विषयः । यद्यपि तत्तद्दर्शने सङ्केतितार्थबोधकशब्दप्रयोग ऊहापोहकुशलैर्वाग्योगविद्भिः कृत इति सम्यक् समन्वय अपेक्षित इति ।

भाषाविज्ञानेऽपि शब्दविचारोऽर्थप्रतीत्यर्थम् । तत्र व्याकरणादिदृष्ट्या शब्दविचारस्तदाश्रितस्यार्थस्य विचारोऽकस्मादायाति । तत्र शब्दार्थतत्त्वस्य शब्दार्थपरिवर्तनस्य वा Semantics नाम्ना व्यवहारो भवति । वस्तुतो यास्केन सहापूर्वमेव सामञ्जस्यमपरदर्शनसिद्धान्तसमन्वयश्च । नात्र सन्देहो मानवमनसश्चिन्ताधाराया विविधा विचित्रा च गतिः । अभिधानकोशादुपलब्धशब्दार्थनिर्देशः स्पष्टतरः । किन्तु भाषायामभिधानादेव न शब्दाः सङ्ग्रहीष्यन्ते । सुदूरपूर्वकालात् प्रचलितभाषाया इदानीं यस्याः प्राधान्यं नास्ति, तत्रैवाभिधानाश्रयः सर्वथा नियतः, किन्तु भाषयार्थज्ञानवेलायां वाक्यार्थमादौ गृहीत्वाऽनन्तरं पदार्थमवगच्छति । व्यवहारवशाद्वाक्यशक्तिग्राहकाणां मीमांसकादीनां मतमेतत् । एकस्यैव शब्दस्य विभिन्नवाक्ये प्रयोगो विभिन्नवाक्यार्थाभिव्यक्तिश्च । शब्देन सहार्थस्याविच्छेद्यः सम्बन्धः । एकस्यैव शब्दस्य प्रकरणभेदाद् विभिन्नार्थप्रत्यायकत्वम् । तत्रैको मुख्योऽर्थो भवत्यपरश्च गौणः । किन्तु काले गौणोऽपि प्राधान्यं भजति । यथा मस्तकशब्दस्य विभिन्नार्थकप्रयोगो वर्तते । यथाऽस्य मस्तकं नास्ति । हरिर्ग्रामस्य मस्तकभूतः । अस्या बालिकाया मस्तके केशमात्रम् । तस्य मस्तके व्यथाऽस्ति । नगरमस्तके सेना वर्तते । अयं मस्तककार्यकरणेऽसमर्थः, शरीरस्य उच्चतमाङ्गस्य मस्तक इत्याख्या । एवमेव सामान्यरूपेण व्यवहृतस्य शब्दस्य दर्शनविज्ञानादिषु साङ्केतिकार्थपरत्वम् । कदाचिन्मुख्यार्थविलोपे जाते मुख्यार्थप्रतिपादनं भवति, यथा मण्डपलावण्यादयः । बहुधा वाक्येषु पदप्रकृतार्थग्रहणं न भवति ।

**ध्वनिपरिवर्तनेनार्थभेदः**

ध्वनिपरिवर्तनवशादप्यर्थभेदो भवति । ध्वनिपरिवर्तनसम्पर्काच्छब्दार्थपरिवर्तने विभिन्नशब्दोत्पत्तिकथा कौतुकवहा, यथा शृङ्गेरशब्दस्य वैदेशिकरूपान्तरे ग्रीके जिञ्जीवैरिस्, लैटिनभाषायां जिञ्जिवेर, आङ्ग्लभाषायां जिञ्जर, स्पेनीभाषायां Dengeav प्रभृतिशब्दः Homophone; अर्थात् समपशब्देन व्यवहृतो भवति । बहुधा वाक्यसंक्षेपार्थमेकस्मिन्नेव पदे वाक्यार्थः

१. New English Grammar—H. Sweet, P-4.

२. पा सू०—१।२।५३ ।

संहृतो भवति। एतादृशः शब्दः कदाचिद् विभक्तिरहितोऽपि प्रयुज्यते। यथा भाषायां भोजन-पदार्थस्य कृते 'खाना'शब्दस्य प्रयोगः प्रसिद्धः। इदानीम् एष पृथगेव शब्दः। यथाऽवेस्तीय-भाषायामर्याणां देश एतस्य शब्दस्य कृते **'अरियानां वत्रजो'** इति व्यवहारो लभ्यते। अत्र द्वितीयपदलोपे जाते ईराननामोद्भवः। भोटानां संस्कृतशब्दस्य कृते भूटानादिशब्दप्रयोगः। सामान्यतया शब्दस्य प्रधानार्थेन सहानुषङ्गिकोऽर्थस्तिष्ठति। कालक्रमे तत्र कोऽप्यर्थः प्राधान्यं भजते। यथा वैदिककाले 'वर'शब्दस्यार्थ आसीत् कन्यानिर्वाचनकारी। अनन्तरं विवाहार्थेऽर्थः सञ्जातः। इदानीं सद्यो विवाहितः पुरुषः पतिर्वाऽर्थो भवति। अत्र नास्ति सन्देहो यदत्रानुषङ्गिकार्थस्य प्राधान्यं जायते। स बहुधा उपमारूपकोत्प्रेक्षादिवशाद् मुख्यमर्थं परित्यज्य गौणेऽर्थे शब्दप्रयोगो भवति! तैलशब्दस्य तिलभवस्निग्धपदार्थे प्रयोगः। अनन्तरं सर्वेष्वपि सर्षपादिभवेषु स्निग्धपदार्थेषु तैलशब्दप्रयोगः। किन्तु तिलतैलं सर्षपतैलमिति विशेषणविशिष्टमेव। तस्मादर्थपरिवर्तनस्य विचित्रैव सरणिः।

सामान्यतयाऽर्थपरिवर्तनस्य प्रकारत्रयं वर्तते—

१. अर्थविस्तारः।

२. अर्थसङ्कोचः।

३. अर्थसंश्लेषः, अर्थसंक्रमो वा।

रूपकातिशयोक्त्याद्यलङ्कारप्रभावेण शब्दस्यार्थो वस्तुनिरपेक्षो जायते, तदाऽर्थप्रसारो भवति। अयमेव अर्थप्रसारो व्यक्तेर्वस्तुनो वा विशेषधर्मो गुणश्च काले सङ्कोर्णो भूत्वा बहुवस्तुनः साधारणधर्मो गुणश्च तदर्थो जायते। यथा वृत्रशब्दोऽसुरापरपर्यायः कदाचित् साधारणशत्रुवाचकः सन्नधिकबलवच्छत्रुविषये प्रयुक्तो भवति, तदा वृत्रातर इत्येष प्रयोगो जायते। एवमेव इन्द्र-शब्दो वीरापरपर्यायः सन् श्रेष्ठतमवीरार्थबोधनार्थम् इन्द्रतम् इति प्रयुक्तो भवति। शरच्छब्दस्य मूलार्थः शीतकालो भवति। प्राचीनयुगे शीतकालस्य कठोरताऽसहनीयाऽऽसीत्। अतो वर्षेऽयं मुख्यतमः कालः। प्राचीनपारसीभाषायाम् **'थर्द'**शब्दो वत्सरार्थकः। अयमेव थर्दशब्दः **'सर्दी'**-शब्दस्य मूलभूतः। अर्थविस्तारफलेन कदाचिद् व्यक्तिनामरूपेण कदाचित् साधारणगुणवाचकेन प्रयुक्तो भवति। यथा सूरदासव्यक्तिविशेषस्य नामेदानीमन्धभिक्षुकृते प्रयुक्तो भवति। यथा ऋजुशब्दस्यार्थविचारवशाद् **'रास्ता'** इति अर्थो भवति।

मीमांसकानाम् न्यायवैशेषिकानाम्, वैयाकरणानां भाषावैज्ञानिकानाञ्चैष विचारः समीचीनतमः, तस्य विश्लेषणमस्माभिः कृतमेव।

वैयाकरणानां प्रतिभैव वाक्यार्थः। एष प्रतिभावाक्यार्थपक्षः सुदूरपूर्वकालात् प्रतीक-तत्त्वमूलभूतः स्वीकृतः। वाक्यम् अर्थश्च सर्वथा तादात्म्यापन्नौ। श्रीमता कालिदासेनापि **'वागर्थाविव सम्पृक्तौ पार्वतीपरमेश्वरावेव जगन्मूलभूतौ'** विश्वप्रपञ्चस्य च शब्दमूलकत्वमेव परावाग्रूपाज्जगतः सृष्टिर्भारतीयप्रतिभावादिभिरभ्युपगता। पाश्चात्त्ये Colsidge प्रभृतिभिरपि तथैव स्वीकृतम्। तैरपि शब्दार्थयोरभेदः स्वीकृतः। उक्तञ्चाभिनवगुप्तेन—'सहृदयायतनसततोदितप्रतिभाभिधानपरावाग्देवतानुग्रहस्थितिविचित्रापूर्वार्थनिर्माणशालिनः प्रजापतेरिव कामजनित-जगतः[1]' इति।

१. अभिनवभारती—१, पृ० ४।

एष च सिद्धान्तः शब्दस्य जगन्मूलकत्वप्रतिपादकस्य वैयाकरणस्यैव। वाक्यपदीये स्पष्टमुक्तं यदस्य विश्वस्य निबन्धनी शब्देष्वाश्रिता काचिच्छक्तिः। सैव च शक्तिः प्रतिभारूपा। स्वोपज्ञव्याख्यायां भर्तृहरिणा उक्तम्—'तत्र केषाञ्चिदाकृतयः सूक्ष्मशब्दाधिष्ठाननिबन्धनाः। ताः खल्वात्माभिव्यक्तिमधिष्ठानपरिणामेन प्रतिलभमाना वाच्यवाचकभावेन व्यवतिष्ठन्ते। यथापरेषामिन्द्रियेषु विषयमात्राशक्तयः प्रतिलयं गच्छन्ति, तथेन्द्रियमात्राशक्तयो बुद्धिषु बुद्धिमात्राशक्तयः प्रतिसंहृतक्रमे वागात्मनि। सा चेयं स्वप्नप्रबोधवृत्तिः प्रविभक्तपुरुषानुकारा महत्यपि वाक्तत्त्वे कारणे नित्यमवस्थिता। तथाऽपरेऽप्याहुः—

वागेवार्थं पश्यति वाग्ब्रवीति वागेवार्थं निहितं सन्तनोति।
वाच्यैव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्त[१] ॥

प्राणिनां कृते वागेवार्थक्रियासु समीहयेत् सर्वेषु बहिः सर्गेषु तन्निबन्धनाद् लोकव्यवहारतदभावान्नियतमुत्सीदेत्। व्यवहारयोग्यस्य परिच्छेदात् सर्वः काष्ठकुड्यादिवत्। नात्र सन्देहो वाचो विभिन्नाः शक्तय आत्मानमात्मना प्रविभज्य पृथग्विधानभावान् सृष्ट्वा सर्वकार्यं कुर्वन्ति। अत्र च प्रतिभाया एवेमे सर्वे विस्फुलिङ्गाः सन्ति। सैव सर्वकार्यं सञ्चालयतीति स्पष्टमुद्घोषितमभिनवगुप्ताचार्येण—

यदुन्मीलनशक्त्यैव विश्वमुन्मीलितं क्षणात्।
स्वात्मायतनविश्रान्ता तां वन्दे प्रतिभां शिवाम्[२] ॥

वाचश्चतुर्धा विभागः शास्त्रेषु प्रदर्शितः। सा च—परा पश्यन्ती मध्यमा वैखरी चेति। तस्या विश्लेषणं तत्तच्छास्त्रेषु वर्तते। वैयाकरणाः परां वाचं न निर्दिशन्ति, परन्तु शैवागमसिद्धान्ते वाचः स्वरूपनिरूपणप्रसङ्गे चतुर्विधाया वाचो निरूपणं वर्तते। संक्षेपेणैवं वक्तुं शक्यते-'अहमात्मा परामर्शः परा वागुच्यते बुधः' इति।

नैसर्गिकी स्फुरच्चात्मा विमर्शाख्या परा प्रभोः।
अक्रमा क्रमरूपैव शक्तिः स्वातन्त्र्यलक्षणा ॥
जननी सर्वशक्तीनां सर्वशक्तिमयी परा।
राजते संविदात्मेव शक्तिश्चैतन्यचन्द्रिका[३] ॥

एतस्या एव पराख्यायाः शक्तेर्विश्लेषणं कुर्वतोऽग्रे उक्तम्—'शक्तिपश्यन्त्यभिन्नां स्वां स्वातन्त्र्याख्यामिमां पराम्[४]' इति।

अतः सकलो हि लोको यथाव्यक्तिस्तथैव पश्यति। लोकस्य ज्ञानमेव लौकिकं व्यवहारतो बालकस्यापि सकलं ज्ञानं जायते।[५] पश्यन्त्याः—

अन्तारूप त्यजन्तीव जिघृक्षन्तीव बाह्यताम्।
परोल्लिलसिषा युक्ता पश्यन्ती प्रोच्यते बुधैः[६] ॥

---

१ नि० ६।१; २. लोचनम्, पृ०—१६१।
३. पूर्णताप्रत्यभिज्ञा—श्लो० १३७–३८। ४. तदेव, श्लो० ६५।
५. तदेव, ३८८। ६. तदेव, २८३।

अस्यां पश्यन्त्यां वाच्यवाचकयोः क्रमो नोदेति, भेदस्य स्फुटता च न विभाति; किन्तु चिज्जोतिषप्राधान्यं द्रष्टृरूपता, अत एव इयं पश्यन्ती यत्र तु वाच्यवाचकयोरसूत्रितविभागक्रमा स्फुटा, स्फुटात्मरूपत्वाद् बुद्धया गृह्यते। सैव द्रष्टृदृश्ययोर्दर्शनस्य मध्याभूता इयमेव च मध्यमा। अनन्तरं गृहीतवर्णरूपेयं वाक् प्रस्थानकरणप्रयत्नादिबलाद् दृश्यस्य इन्द्रियग्राह्यजत्वाद् विखराख्ये शरीरे च भवत्वाद् वैखरी वाक्। तदयं क्रम आगमानाम्—

परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशतः॥
वैखर्या हि कृतो नादः परश्रवणगोचरः॥

अयं चोच्चारणः क्रमः शरीरेन्द्रियमनोबुद्धिव्यतिरिक्त आत्मा बुद्धया सह, अर्थान् बाह्यान् सम्यगवगम्य मनो वक्तुमिच्छया युङ्क्ते। मनः आत्मा नियुक्ते नियुक्तं मनः शरीराग्निमाभिमुख्येन हन्ति। अतः अग्निः वायुं प्रेरयति, वायुः उरसि चरन् स्वरमुत्पादयति। स ऊर्ध्वगतो वायुर्मूर्धानमभिहतः, अर्थाद् मूर्ध्नः उपरिष्ठानां गतिमलभमानो मुखमापद्य वर्णान् जनयते। एषां स्वरतः कालतः स्थानात् प्रयत्नात् अनुप्रदानात् पञ्चधा विभागो जायते। व्याप्त्यर्थकाद् अश्नोतेः सिद्धः अक्षरशब्दो व्याप्त्यर्थको भवति। स च कूटस्थः। अत्र च क्षेत्रज्ञस्य शब्देन सह किमर्थं सम्बन्धोऽभिप्रेत इत्याशङ्कायां भारतीयदृष्ट्या एतद्वक्तुं शक्यते यदात्मा बुद्धया समर्थायां नित्यः क्षेत्रज्ञः। यो ह्यत्रात्माभिप्रेतो भवति, तस्य किमर्थं वर्णनं क्रियते—आत्मा बुद्ध्येत्यत्र द्वावप्यात्मानौ तौ क्षेत्रज्ञपरमात्माभिधेयरूपावभिप्रेतौ तन्त्रेणोच्चारितौ। तन्त्रेणोच्चारणं सूत्राणामलङ्कारः। एवं चेत् किमर्थं परमात्मनो वर्णनिमित्तत्वमुक्तम्? तत्रोच्यते—अपवर्गसाधनोपकारत्वाच्छिक्षाया अपवर्गस्य चायमेवोपायः शरीरादिव्यतिरिक्तस्य परमात्मनो बोधः[1]।

प्रतिभायाः विस्तृतं विश्लेषणं विभिन्नदार्शनिकसिद्धान्तमवलम्ब्य अस्माभि स्वीयानुसन्धान-प्रबन्धे करिष्यते। दिङ्मात्रमिह संक्षिप्तलेखे विश्लेषणं प्रस्तुतम्। तदयम् संक्षेपः—

यदुन्मीलनशक्त्यैव विश्वमुन्मीलितं क्षणात्।
स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम्॥
प्राज्यं प्रोल्लासमात्रं सद्भेदेनासूत्र्यते यया।
वन्देऽभिनवगुप्तोऽहं पश्यन्तीं तामिदं जगत्॥
काव्यालोके प्रथां नीतान् ध्वनिभेदान् परामृशत्।
इदानीं लोचनं लोकान् कृतार्थान् संविधास्यति॥
आसूत्रितानां भेदानां स्फुटतापत्तिदायिनीम्।
त्रिलोचनप्रियां वन्दे मध्यमां परमेश्वरीम्॥
स्फुटीकृतार्थवैचित्र्यबहिःप्रसरदायिनीम्।
तुर्यां शक्तिमहं वन्दे प्रत्यक्षार्थनिदर्शिनीम्॥



१. पाणिनीयशिक्षा, पृ० १५।

# अस्माकं सूर्यः

प० अवधविहारीत्रिपाठो

सम्मानितप्राध्यापकः—सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

आधुनिकं विज्ञानं प्रकृतेरन्तर्निहितं निधिमात्मसात्कृत्य न केवलं मानवानां सुखैश्वर्याणां कृतेऽपरिमितं साधनं समग्रहीत, प्रत्युत ब्रह्माण्डस्य नवनवानां रहस्यानामुद्घाटनेऽपि महदाश्चर्यंकरं साफल्यं समभ्यगात्, विज्ञानस्य विश्वमस्माकं क्षित्यवधिकमेव न मर्यादितम्, किन्तु निरवधि-व्योममण्डले विस्तीर्णाः सकलाः प्रकाशपिण्डास्तस्याङ्गानि सन्ति । रात्रौ विद्योतमाना ये तारका-पिण्डा अस्माकमतितराः लघुतमा दृग्गोचरीभवन्ति, ते विज्ञानपर्यालोचनया एकैकाः सूर्याः सन्ति । तानपि परितः परिभ्रमणशीला अनेके ग्रहपिण्डास्तादृशा एव सन्ति, यथाऽस्माकं सूर्यं परितो बुध-शुक्रभौमादयो ग्रहाः परिभ्रमन्ति । आकाशीयपिण्डेषु सर्वेभ्यो महत्तमत्वेन दृग्गोचरीभूयमानोऽस्माकं सूर्यस्तेभ्योऽनेकेभ्यो लघीयान् । इमे सर्वे तारकापिण्डाः स्वरूपसूर्या मिथ आकृष्यन्त आकाशे स्वनियतस्थानेषु स्थितिं भजन्ते । वर्षाणां लक्षसंख्यानन्तरमपि तेषां स्थानेषु स्वल्पमेवान्तरं दृष्टिपथमायाति, अतः पृथ्वीनिवासिनो वयं तान् स्थिरान्नेवावलोकयामः । तात्पर्यमिदं यदस्माकं सूर्योऽपि एका तारका एव, य आसां तारकाणां स्वस्य चाकर्षणेनाकाशे स्तम्भितो विद्यते ।

**सौरपरिवारः**

आधुनिके काले ग्रहः स परिभाष्यते, यः सूर्यं परितः परिभ्रमति, परिष्कृतपरिभाषाया-मिदमित्थं कथयितुं शक्यते यत् सूर्याधीनगतिमत्त्वं ग्रहत्वम् । परिभाषयाऽनयाऽस्माकं सूर्यं परितः परिभ्रमणशीला नवग्रहा इदानीं यावदवगताः सन्ति, सूर्याद् विप्रकर्षक्रमेण तेषां नामधेयानि क्रमशो बुधशुक्रक्षितिभौमगुरुशनीन्द्रवरुणयमाः सन्ति । इमे ग्रहाः कुतः समायाता विषयेऽस्मिन् विज्ञानमिदं प्रतिपादयति यत् कस्मिन्नपि काले सूर्यपिण्डाद् विच्छिद्य कतिपया अवयवाः पृथग्भूताः सन्तः सूर्यं परिक्रमितुमारेभिरे, त एवेमे ग्रहा इति । एषां ग्रहाणां सूर्यपिण्डपरि-क्रमणहेतुः सूर्यपिण्डे ग्रहपिण्डेषु च वर्तमानाकर्षणशक्तिरेव । सूर्यो ग्रहान् स्वकेन्द्राभिमुखमाकर्षति, ग्रहाश्च सूर्यं स्वकक्षाभिमुखमाकर्षन्ति । सूर्यपिण्डो ग्रहाणां समवेतपिण्डेभ्योऽतितरो महत्तमः । यदि च नवग्रहाणां पिण्डा एकत्र क्रियेरन्, तदापि तेषां सम्मिलितपिण्डः सूर्यपिण्डस्य षष्ठभाग-परिमित एव भवति । परिणामतः सूर्यस्याकर्षणबलं पृथक् पृथग् ग्रहाणामाकर्षणबलेभ्योऽपि नितरामधिकतमम् ।

रवेर्ग्रहाणां च परस्पराकर्षणपरिणामो रूपद्वयेन दृग्गोचरीभवति । तत्र प्रथमोऽयं यद् रवे-राकर्षणबलाधिक्याद् ग्रहपिण्डाः सूर्यं परितः परिक्रमितुं विवशा भवन्ति । द्वितीयोऽयं यद् ग्रहाणा-माकर्षणेन सूर्यबिम्बमपि स्वधुरि मन्दगत्या परिभ्रमितुमारभते, इदमेव कारणं यत् सूर्यपिण्डस्य कालकः कलङ्को यदाऽस्माकं सम्मुखे भवति, तदा दृग्गोचरीभवति । यदा चास्माकं दृक्पथात् पश्चात्तनो भवति, तदा स दृष्टिपथं नायाति । सूर्यपिण्डतः समुद्भूता ग्रहाः सूर्यश्च सौरपरिवार इति व्यपदिश्यते ।

**सौरपरिवारे सापेक्षस्थितयः**

सौरपरिवारे नवग्रहाः सूर्यात् पृथग् दूरत्वभाजो विद्यन्ते । अत्रायं हेतुर्यत् सूर्यात् पृथक्त्व-काले यस्य ग्रहस्य पिण्डपरिमाणो यावानभवत्, स तदनुसारमेव सूर्याद् विप्रकर्षमवाप्य तं परि-क्रमितुमारब्धवान् । बुधः सूर्यात् सर्वेभ्योऽल्पिष्ठदूरत्वभाग् विद्यते । ततोऽधिकदूरत्वभाक् शुक्रः ततः पृथ्वी, पृथिव्यपेक्षया क्रमतो भौमगुरुशनीन्द्रवरुणयमाः, सूर्यत उत्तरोत्तरं वर्धमानविप्रकर्षेषु स्थिता वर्तन्ते । किन्तु तेषां बिम्बपरिमाणानां लघुत्वगुरुत्वानि नैतत् क्रममनुसृत्य विद्यन्ते । दूरत्व-मनुसृत्य भौमस्थानं सौरपरिवारे चतुर्थं विद्यते, किन्तु गुरुत्वपरिमाणे तदीयं स्थानं द्वितीयं विद्यते । एषु सर्वेभ्योऽल्पीयान् बुधः । ततो गरीयांसौ भू-शुक्रौ, गुरुः सौरग्रहमालायां सर्वेभ्यो महत्तमः, किन्तु दूरत्वानुसारं तदीयं पञ्चमं स्थानं विद्यते । अत्र हेतुरयं यत् सूर्याद् विच्छेदकाले वर्तमानविप्रकर्षे स्थितिसमय एषां ग्रहाणां यः खलु पिण्डपरिमाण आसीत्, तस्मात् कतिपया भागास्ततो पृथग्भूत्वा स्वग्रहं परितो भ्रमितुं प्रवृत्ताः ।

ते च तस्य ग्रहस्योपग्रहाश्चन्द्रमसो वा कथ्यन्ते । यथाहि—अस्माकं पृथिव्याः परिक्रामक एकश्चन्द्रः । तथैव भौमस्थपरिक्रामकौ द्वौ चन्द्रमसौ । बृहस्पतेः शनेश्च नव चन्द्रमसः । इन्द्रस्य चत्वारो वरुणस्यैक एव विद्यते, बुध-शुक्रयोः कोऽपि चन्द्रो नास्ति । यमस्य चन्द्रो विद्यते न वेत्यद्यावधि न ज्ञातम् । ग्रहैः सार्धमेषां चन्द्रमसामप्याकर्षणं सूर्योपरि पतति, किन्त्वनेन हेतुना ग्रहस्य सापेक्षस्थितौ किमपि गणनीयमन्तरं नैवोद्भवति ।

**ग्रहाणां कक्षा**

इमे ग्रहाः कीदृशे पथि भ्रमन्तीति विषयमधिकृत्य प्राचामाचार्याणामिदमाकूतं यद् भूः ब्रह्माण्डस्य केन्द्रवर्त्तिनी विद्यते, ग्रहाश्च भुवं परितो वृत्तीयमार्गेण परिभ्रमन्ति, किन्त्वधुना सिद्धान्तोऽयं दूरापास्तो विद्यते । इदानीं ब्रह्माण्डीयाकर्षणबलेनेदं राद्धान्तितं विद्यते यत् सर्वे ग्रहाः सूर्यं परितो दीर्घवृत्तीय—(अण्डाकारेण) मार्गेण परिभ्रमन्ति । इत्थमेव कक्षा ग्रहाणामुपग्रहाणा-मपि विद्यते । उपग्रहा हि ग्रहस्य समन्ततो दीर्घवृत्तीयपथेन परिभ्रमन्ति । तस्य पथ एकस्यां नाभौ स्वयं ग्रहस्तिष्ठति । यथाऽस्माकं पृथ्वी चन्द्रमसं दीर्घवृत्तीयमार्गेणात्मानं परितो भ्रामयन्ती सूर्यं परितो वर्षेणैकेन दीर्घवृत्ताकारेण मार्गेण परिभ्रमति । इयमेव स्थितिरन्येषामपि ग्रहाणामुप-ग्रहाणां च विद्यते ।

**सूर्यस्य विस्तारो घनत्वं च**

सूर्यस्य व्यासो भूम्यासतोऽष्टोत्तरशतगुणः, किन्तु तस्य गुरुत्वाकर्षणं पृथ्वीतोऽष्टाविंशति-गुणम् । वक्तव्याशयोऽयं यद् भूतले यद् वस्तु नवमणपरिमितं गुरु भवेत् तत् सूर्यपृष्ठोपरि अष्टाविंशतिमणपरिमितं स्यात् । रवेः पिण्डो वाष्पमयावस्थायां विद्यते । तस्य घनत्वं च जलस्य घनत्वतः सार्धैकगुणः स्यात् । पृथिव्या न्यूनतमघनत्वं ग्रहस्य घनत्वतः सार्धं पञ्चगुणं विद्यते । रवेर्द्रव्यमानं पृथिव्या द्रव्यमानतः १३३००० गुणं विद्यते ।

**सूर्यपृथिव्यौ**

सूर्यः पृथिव्या जनको विद्यत एव, सहैव पृथिव्याः प्राणिनो वनस्पतयश्च सूर्यमरीचोरुप-जीव्यैव जीवन्ति । रविप्रकाशेनैव पृथिव्या उपर्यहोरात्रं शीत-ग्रीष्म-हिमवर्षा भवन्ति ।

रविमन्तरेण पृथिव्यास्तापमानमेतावन्नीचैर्भवेद् येन सर्वे प्राणिनो वनस्पतयश्च विनष्टा भवेयुः। न केवलं दृष्टेरगोचरा अणव एव निष्पन्दा भवेयुः, प्रत्युत समग्रमपि जगन्निर्जीवं निस्तब्धं च भवेत्। सूर्योऽस्माकं पृथिवीतः त्रिंशल्लक्षाधिकं नवकोटिमीलानि यावद् दूरे तिष्ठति। अत एव चन्द्र इव दृश्यते, प्रकाशकिरणाः प्रति सेकेण्डं षडशीत्युत्तरलक्षमीलपरिमाणेन गतिं कृत्वा किञ्चिदधिकाष्टमितमिनटैरिदं दूरत्वमतिक्रामन्ति। पृथ्वी स्वधुरि सार्धत्रयोविंशतिमितकोणेन प्रावण्यमुपेता विद्यते। सूर्यश्च स्वमार्गेण पृथिव्या मध्यस्थवृत्ततः (नाडीवृत्ततः) सार्धत्रयोविंशतिमितांशैरुत्तरं दक्षिणं च गच्छति। तेन पृथिव्या उपरि ऋतुपरिवर्तनं जायते।

साम्प्रतम् २१ मार्च २२ सितम्बरदिवसयोर्दिनरात्र्योः समत्वं जायते। २१ जूनदिवसे दिनं सर्वेभ्यो महत्तमं भवति, २१ दिसम्बरदिवसे च रात्रिः सर्वापेक्षया बृहत्तमा भवति, मध्ये गताहोरात्र्योर्ह्रासवृद्धी भवतः। गणितेन तन्निर्धार्यते, पृथिव्या व्यासः षड्विंशत्युत्तरैकोनाशीतिमिलमितः। सूर्यव्यासः पृथिव्या व्यासस्य ≈८४००० गुणो विद्यते।

**खगोले सूर्यस्य स्थानं कक्षागतिश्च**

विमले व्योम्याकाशगङ्गायाः कटिमेखलामध्यवर्त्तिभागः श्वेतसिकतापुञ्जसमावृतपथ इव दृग्गोचरीभवति। अत्रैव आकाशगङ्गाया अन्तर्वर्तिधरातलान्तरे मध्यादीषदन्तरिभूतं सूर्यस्य स्थानं विद्यते। आकाशगङ्गाघटकानां तारकाणां मध्ये एकतम एवास्माकं सूर्योऽपि विद्यते। तथा च स स्वपार्श्ववर्तितारकाणामेव साम्यं भजते। तात्पर्यमिदं यत् तासां तारकाणामाकृतयः प्रकाशाश्च प्रायशः साम्यमेव भजन्ते, सूर्यस्य तत्प्रतिवेशितारकाणां चैकं जगत् कैप्टेन विश्वसंज्ञया कथ्यते। यच्च हरकुलिशनक्षत्रपुञ्जस्यैकोंऽश एव।

ग्रहाणामिव रवेरपि एकं भ्रमणमार्गं विद्यते। तस्मिन् मार्गे स स्वपरिवारस्य सदस्यैर्ग्रहैः साकं प्रायः ६७३०० मीलानि प्रतिहोरागत्याऽभिजिन्नक्षत्रमभिवर्धते। अस्मिन् वर्द्धने सूर्यबिम्बस्य गतिदिग् अभिजिन्नक्षत्रकेन्द्रमभिवर्तते।

एतेनैव कारणेन कतिपया वैज्ञानिका अनुमन्यन्ते यदस्माकं सूर्यः स्वग्रहैः सह अभिजिन्नक्षत्रेण सङ्घट्टं करिष्यति। यतो हि अभिजिन्नक्षत्रस्याकारः सौरपरिवारस्य सुदूरवर्तिसदस्यप्लूटोनामकस्य कक्षातोऽप्यधिगुणो वर्तते; किन्त्वस्यां यात्रायां सूर्यस्यैतावान् कालो व्यतीतो भविष्यति यत् तत्र प्राप्तिकालाभ्यन्तर एव स स्वयं शीतो भविष्यति, तदा पुनरनयोः सङ्घट्टनेन नवीनानां ग्रहाणां सृष्टिर्भवेत्।

अस्मिन् ब्रह्माण्डे विनाशोत्पादयोरेतादृश्यः क्रीडाः शाश्वत्यो विद्यन्ते। सम्भवतीदं यदस्माकं पृथिव्या विचित्रप्राणिनो मानवा इवान्यतारकाणां ग्रहाणामपि प्राणिनः स्युः। ये किलास्या दुर्घटक्रीडाया दर्शका भवेयुः।

एवं सूर्यस्य भौतिकसंरचनाक्रियाकलापकक्षास्थितिरधिकृत्य संक्षेपतो वैज्ञानिकानामाकूतं प्रदर्शितम्। इदं खलु सर्वग्राससूर्यग्रहणकाले सामान्यकाले च वैज्ञानिकानामनुसन्धानस्य परिणाम इति शम्।

• ॰ •

# वेदान्तपरिभाषायाः पर्यालोचनम्

श्रीमहादेव उपाध्यायः

सम्मानितप्राध्यापकः—सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी

वैज्ञानिकक्रान्त्या मानवसमाजस्य समेषां क्रियाकलापानामामूलचूडं परिवर्तनं विहितम्। अस्माकमाहारविहारव्यवहाराः कियन्तः परिवर्तिताः, कियन्तश्च परिवर्तमानाः सन्ति। अनुमीयते यत् कतिपयैरेवाहोभिः पूर्णरूपेण परिवर्तिताः सम्पत्स्यन्ते। अस्मासु कश्चिदपि परम्पराणां सरणिमनुसर्तुं न काङ्क्षति, प्रत्युत काङ्क्षति यद् वपुषा, मनसा, विचारेण, दैनन्दिनजीवनेन च वैज्ञानिक आधुनिकश्च स्यामिति। भावनेयं विज्ञानेनोद्बोधिता; किन्तु विज्ञानमिदं वैदेशिकं विदेशादेवागत्य भारतं प्राविशत्। यत्र वयं तिष्ठामः स्थातुञ्च वाञ्छामः। सा वैज्ञानिकी संस्कृतिः सभ्यता च वैदेशिक्येव। साम्प्रतमियमेव सभ्यता मानवसमाजस्य गौरवावहेति मन्वानाः प्रायशो जनाः समनुभूयन्ते। इदानीं नास्त्यस्माकं सविधे तादृशं किमपि वस्तु येन स्वकीयं भारतीयत्वं प्रकटयितुं प्रभवेम, तथा सगर्वं स्वमस्तकं समुन्नतं कर्तुं शक्नुयाम। एवंभूतेऽपि व्यतिकरेऽद्यावधि दुर्गमन्येषां सुरक्षितमस्त्येकं वस्तु दर्शनं नाम। येन स्वत्वं संरक्षन्तो वयं वैदेशिकसभ्यतयाऽऽक्रान्तमुत्पीडितञ्च मानवसमाजं प्रत्ने सत्पथ आनयन्तो मानवतायाः सार्थकतां बोधयितुं प्रभविष्यामः।

भारतीयदर्शनपदोच्चारणसमकालमेव निसर्गतः समेषां मनोवृत्तिरद्वैतवेदान्तं समाश्लिष्यति। हेतुरत्र सम्भवतोऽद्वैतवेदान्तो यथा जनजीवने निरतिशयसुखशान्त्याधायकः, न तथान्यदर्शनम्। परमार्थतः सर्वेषां दर्शनानां पर्यवसितिरद्वैतवेदान्त एव जायते। अद्वैतवेदान्तस्य महत्तायाः लोकप्रियताया व्यापकतायाश्चानेके हेतवः सन्ति। प्रमुखकारणमत्र समन्वयभावनोद्बोधकत्वम्। अद्वैतवेदान्तोऽखिलान् जनिमत उचितं स्थानं प्रदाय सम्मानयति। नात्र कस्यचिदपि मतान्तरस्य विमानना। प्रत्युताधिकारिभेदेन सर्वेऽस्योदारप्राङ्गणे विश्राम्यन्ति। अद्वैतवेदान्तो लोकव्यवहारः परलोकभोगमोक्षादीन् सर्वथा व्यवस्थापयति। अद्वैतवेदान्तानुसारं निखिला नरा नार्यश्चात्रैवानेनैव शरीरेण भगवत्साक्षात्कारं कर्तुं प्रभवन्ति। अयमेव हि— **'भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्मात् लोकाद् अमृता भवन्ति'** इति सन्दिशति। एतावत्यौदार्ये सत्यपि बाह्यदृष्टयः कतिपयोऽद्वैतवेदान्तं पलायनवादीति मायावादीत्युदीर्योपहसन्तः स्वमनीषां परिचाययन्ति। तेष्वस्माकमयमेवाग्रहो यद् योगवासिष्ठ-गौडपादाचार्य-विद्यारण्यप्रभृत्याचार्याणां विचारैः श्रीशङ्कराचार्यविचारान् संयोज्य न केवलं व्यक्तिरूपेण, किन्तु शङ्कराचार्यप्रणीतग्रन्थेष्वेव शङ्कराचार्यं परिचिन्वन्तु।

इयति विशालेऽद्वैतवेदान्ते प्रमेयविवेचनार्थं नैके ग्रन्थाः प्रणीता उपलभ्यन्ते, किन्तु कुत्रापि व्यवस्थितरूपेण प्रमाणानां विचारो नावलोक्यते। यद्यपि खण्डनखण्डखाद्याद्वैतसिद्धिचित्सुखीप्रभृतिग्रन्थेषु न्यायशास्त्राभिमतप्रमाणानां तत्तत्स्थलेषु खण्डनप्रकारा दृश्यन्ते, किन्तु

वेदान्ते स्वाभिमतानि कियन्ति प्रमाणानि सन्तीति क्रमिकोल्लेखो न विद्यते। अस्याभावस्य पूर्तिः श्रीधर्मराजाध्वरीणेन विहिता। अस्याभावस्य पूरकस्तन्निर्मितो वेदान्तपरिभाषाभिधः प्रमाण-ग्रन्थो विद्यते। येन विना विशालोऽद्वैतवेदान्तोऽपूर्ण इव भाति स्म।

श्रीशङ्कराचार्यो ब्रह्मसूत्रस्य देवताधिकरणभाष्ये **'व्यवहारे भट्टनयः'** इत्यवोचत्, तदनु-यायिभिरप्याचार्यैरेषोक्तिः सर्वथाऽन्वमोद्यत। वेदान्तपरिभाषाकारेणापि चरितार्थितैषोक्तिः स्वकीये ग्रन्थे।

भट्टास्तु षट् प्रमाणानि स्वीकुर्वन्ति, तद्यथा—प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुप-लब्धयः। एभिः सह विषयप्रयोजने संयोज्य परिभाषाकारः स्वग्रन्थमष्टभिः परिच्छेदैर्विबभाज। तेषामेव विवेचनं क्रमशः प्रस्तूयते—

**१. प्रत्यक्षपरिच्छेदः**

**प्रमा**—परिभाषाकारः **'अनधिगताबाधितार्थज्ञानं प्रमा'** इति वक्ति। स्मृतिव्यावृत्त्यर्थं-मनधिगतेति, भ्रान्तिव्यावृत्त्यर्थमबाधितेति। इदानीमयं घट इति प्रतीतौ कालस्यापि भानात् कालस्यापि प्रत्यक्षता।

वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तस्थायित्वेन धारावाहिकज्ञानमेकमेवेति।

प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणम्। प्रत्यक्षप्रमा चात्र चैतन्यमेव **'यत्साक्षादपरोक्षाद् ब्रह्म'**। अपरोक्षात्—अपरोक्षमिति। प्रत्यक्षस्य सन्मात्रग्राहित्वेन भ्रमं निवर्तयति।

**प्रत्यक्षस्याष्टौ भेदाः**

(१) ज्ञानगतं प्रत्यक्षम्, (२) विषयगतं प्रत्यक्षम्, (३) सविकल्पकप्रत्यक्षम्, (४) निर्वि-कल्पकप्रत्यक्षम्, (५) ईश्वरसाक्षी, (६) जीवसाक्षी, (७) इन्द्रियजन्यम्, (८) इन्द्रियाजन्यम् इति।

तत्र ज्ञानगतप्रत्यक्षत्वप्रयोजकं प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेदः। **त्रिविधं चैतन्यम्**—प्रमाणचैतन्यम्, विषयावच्छिन्नं चैतन्यम्, प्रमात्रवच्छिन्नं चैतन्यञ्च।

अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्, घटाद्यवच्छिन्नं चैतन्यं विषयचैतन्यम्, अन्तःकरणावच्छिन्नं प्रमातृचैतन्यम्। तथा च तत्तद्वृत्त्यवच्छिन्नचैतन्यस्य तत्तदिन्द्रिययोग्य-वर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तस्मिन् तस्मिन् ज्ञानांशे प्रत्यक्षत्वप्रयोजकमिति तात्पर्यम्। घटादेर्विषयस्य प्रत्यक्षत्वं तु प्रमात्रभिन्नत्वम्। संसर्गावगाहिज्ञानं सविकल्पकम्, संसर्गानवगाहिज्ञानं निर्विकल्पकं प्रत्यक्षम्। मायोपहितचैतन्यमीश्वरसाक्षि तथाऽन्तःकरणो-पहितचैतन्यं जीवसाक्षि प्रत्यक्षम्। चक्षुरादीन्द्रियसन्निकर्षेणोत्पन्नं घटादिज्ञानम्, इन्द्रियजन्यं प्रत्यक्षम्, तथा मानससन्निकर्षेणोत्पन्नं सुखादिज्ञानमिन्द्रियाजन्यं प्रत्यक्षम्।

**वृत्तिः**—इन्द्रियप्रणालिकया निर्गतमन्तःकरणं विषयदेशं प्राप्य विषयाकारेण परिणमति, अयमेव हि परिणामो वृत्तिरित्युच्यते। आवरणाभिभवार्था वृत्तिः। तदुक्तं पञ्चदश्याम्—

**बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम्।**
**तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्॥** इति।

एकजीववादे जीवस्योपाधिरविद्या, सा च व्यापिका, तदुपहितजीवोऽपि व्यापकः। जीवस्य व्यापकत्वेन जगतः समस्तानि वस्तूनि तेन सदा सम्बद्धानि। अविद्याऽऽवृतत्वेन न तानि प्रत्यक्षविषयाणि। वृत्तिश्च येन वस्तुना सम्बद्धा जायते तदावरणमपसारयति।

अनेकजीववादे अन्तःकरणं जीवस्योपाधिः, तत्परिच्छिन्नत्वेन जीवस्य वस्तुभिः सह सम्पर्को न जायते। वृत्तिद्वारा जीवस्य विषयैः सह सम्पर्को भवति।

**मनः**—सर्वाणि भारतीयदर्शनानि मन इन्द्रियं मन्वते। अत्र प्रमाणम् **'मनः षष्ठानीन्द्रियाणि'** इति गीतावचनमुपस्थापयन्ति। परिभाषाकारो नेन्द्रियं मनः, तदेवान्तःकरणम्। अनिन्द्रियेणापि मनसा षट्त्वसंख्यापूरणात्। **'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः'**[1] इत्युपनिषदि स्पष्टतया मन इन्द्रियेभ्यो भिन्नं तथा श्रेष्ठं स्वीकृतम्। इदमेव मनो यदा विषयाकारेण परिणमति, स परिणामो वृत्तिरित्युच्यते। मनः सावयवं सान्तञ्च मुक्तिपर्यन्तं तिष्ठति, इदं मध्यमपरिमाणञ्च।

**पर्वतो वह्निमान्**—'पर्वतो वह्निमान्' इत्यत्र न्यायदर्शनम् एवानुमित्यात्मकज्ञानस्यैकत्वेऽपि पर्वतस्योद्देश्यत्वाद् वह्नेश्च विधेयत्वाद् विधेयस्य चापूर्वत्वात् वह्निरूपविधेयांश एवानुमेयत्वं बोधयति।

**तत्त्वमसि सोऽयं देवदत्तः**—'तत्त्वमसि सोऽयं देवदत्तः' इति शाब्दज्ञानमपि प्रत्यक्षमङ्गीकरोति परिभाषाकारः, यतोऽत्रापि प्रमाणचैतन्यस्य विषयचैतन्येनाभेदो भवति। ननु तत्त्वमस्यादिशाब्दज्ञानं कथं निर्विकल्पप्रत्यक्षम्? अत्रापि प्रकृतिप्रत्ययादिज्ञानसत्त्वात्, संसर्गाविगाहिज्ञानत्वस्य निर्विकल्पकत्वादत्रादोषात्। तात्पर्यविषय एव शाब्दबोधविषयो भवति। प्रकृते चासौ तात्पर्यात्संसर्गे च तदभावाद्भवति निर्विकल्पकत्वम्।

**माया**—मायोपहितचैतन्यमेवेश्वरसाक्षी। सा च मायैका, तेनेश्वरसाक्ष्यप्येकम्, किन्तु जीवसाक्ष्यनेकम्। **'इन्द्रो मायाभिः पुरुरूपमियते'** इत्यत्र मायाभिर्बहुवचनेन मायाया अनेकशक्तिवृत्तयः सङ्केत्यन्ते।

**श्रोत्रजप्रत्यक्षम्**—घटादिप्रत्यक्षे विषयस्येन्द्रियेण सन्निकर्ष आवश्यकः। घ्राणरसनात्वचः स्वस्थानस्थिता एव विषयं गृह्णन्ति, न च विषयदेशं गच्छन्ति। चक्षुरिन्द्रियं श्रोत्रेन्द्रियं च विषयदेशं प्राप्य विषयं गृह्णीतः। श्रोत्रजप्रत्यक्षे परिभाषाकारो वीचितरङ्गन्यायं नाङ्गीकरोति।

**भ्रमः**—'शुक्तिरजतम्, रज्जुसर्पः' इत्यादावनिर्वचनीयरजताद्युत्पत्तिः, किन्तु यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तिः। अत एवेन्द्रियसन्निकृष्टतया जपाकुसुमगतलौहित्यस्य स्फटिके भानसम्भवाद् न स्फटिकेऽनिर्वचनीयलौहित्योत्पत्तिः। एवञ्च तत्रापि प्रत्यक्षसामान्यलक्षणस्य चित्त्वस्यानुगमः।

**२. अनुमानपरिच्छेदः**

परिभाषाकारोऽनुमितिकरणं व्याप्तिज्ञानं मन्यते, तत्संस्कारोऽवान्तरव्यापारः, न तु तृतीयलिङ्गपरामर्शोऽनुमितौ करणम्।

---

१. उ०—

**अवयवाः**—न्यायदर्शने परार्थानुमाने पञ्चावयवान् स्वीकुर्वन्ति । परिभाषाकारस्तु त्रीनेव मन्यते प्रतिज्ञाहेतूदाहरणरूपाः । उदाहरणोपनयनिगमनरूपा वा । तच्चानुमानमन्वयिरूपमेकमेव, न तु केवलान्वयि । सर्वस्यापि धर्मस्य ब्रह्मनिष्ठात्यन्ताऽभावप्रतियोगित्वेनात्यन्ताऽभावाप्रतियोगि-साध्यसाधकत्वरूपकेवलान्वयित्वस्यासिद्धेः । नापि व्यतिरेकिरूपम्, साध्याभावे साधनाभाव-निरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयोगात् । एवं नान्वयव्यतिरेकित्वरूपम्, व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वात् ।

**ब्रह्मणो द्रव्यत्वखण्डनम्**—ब्रह्मप्रत्यक्षम्, 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुत्या तस्य निर्गुणत्वेऽपि नीरूपस्य रूपस्येव प्रत्यक्षत्वम् । गुणवत्त्वं क्रियावत्त्वं वा द्रव्यसामान्यलक्षणम् । न हि निर्गुणस्य ब्रह्मणो गुणाश्रयता, नापि समवायिकारणता, समवायासिद्धेः । अस्तु वा तुष्यतु दुर्जनन्यायेन ब्रह्मणो द्रव्यत्वम्, तथाप्यस्मिन् काले घटो नास्तीति प्रतीतिबलात् कालस्य यथेन्द्रिय-वेद्यत्वमध्वरमीमांसकैः स्वीकृतम्, तथा तदन्यथासिद्धप्रतीतिबलाद् ब्रह्मणोऽपि प्रत्यक्षत्वम् ।

### ३, उपमानपरिच्छेदः

सादृश्यप्रमाकरणमुपमानम् । तथा हि, नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिः—अयं पिण्डः, गोभिन्नत्वे सति गोगतभूयो धर्मवान् इति । तदनन्तरं भवति निश्चयः, अनेन सदृशी मदीया गौरिति गवयपिण्डनिरूपितगोनिष्ठसादृश्य-ज्ञानं फलम्, तथाऽयं पिण्डो गोसदृश इति गोनिरूपितगवयपिण्डनिष्ठसादृश्यज्ञानं करणम् । प्रथमज्ञाने जाते सति द्वितीयज्ञानस्योपदर्शनात्, तदविनातदभावादन्वयव्यतिरेकाभ्यां करणस्योप-मानत्वं फलस्य चोपमितित्वम् । इदं गवयप्रतियोगिकगोनिष्ठसादृश्यज्ञानं गवयपिण्डेनेन्द्रिय-सन्निकर्षसमये प्रत्यक्षेण न सम्भवति, नाप्यनुमानेन गवयनिष्ठगोसादृश्यस्यातल्लिङ्गत्वात् । उपमिनोमीत्यनुव्यवसायादुपमानं मानान्तरम् ।

### ४. आगमपरिच्छेदः

तदेव वाक्यं प्रमाणं यस्य तात्पर्यविषयीभूतसंसर्गोऽन्यप्रमाणैर्न बाध्यते । वाक्यजन्यज्ञान आकांक्षायोग्यताऽऽसत्तितात्पर्यज्ञानानि कारणानि । पदार्थानां परस्परजिज्ञासा विषयतायोग्यत्वं-वाकाङ्क्षा, तात्पर्यविषयीभूतसंसर्गाबाध एव योग्यताऽव्यवधानेन पदजन्यपदार्थोपस्थितिरासत्तिः, पदार्थानां प्रतीतिजन्ययोग्यता तात्पर्यम् ।

**शक्तिलक्षणा च**—पदार्थः शक्यो लक्ष्यश्च भवति । शक्त्या बोधितोऽर्थः शक्यः, लक्षणया बोधितोऽर्थो लक्ष्यः । लक्षणाबीजं तात्पर्यानुपपत्तिः, नान्वयानुपपत्तिः । 'काकेभ्यो दधिरक्ष्यताम्' इत्यत्र लक्षणास्थलेऽन्वयानुपपत्त्यभावात्, लक्षणा च न केवलं पदे, किन्तु वाक्येऽपि ।

**'तत्त्वमसि' इत्यत्र लक्षणा**—केवललक्षणा लक्षितलक्षणा चेति लक्षणाया भेदद्वयम् । पुनर्लक्षणायाः प्रकारत्रयम्—(१) जहत्, (२) अजहत्, (३) जहदजहच्च । 'तत्त्वमसि, सोऽयं देवदत्तः' इत्यादौ जहदजहल्लक्षणा । तत्र सर्वज्ञत्वाल्पज्ञत्वादिधर्मान् परित्यज्य शुद्धचैतन्यमात्रे लक्षणा परिभाषाकारो भागत्यागलक्षणायां नैवाभिरुचिं दधाति । तत्त्वमस्यादिस्थले लक्षणां विनापि केवलशक्त्यैव चैतन्यमात्रं देवदत्तमात्रञ्च बुद्धयते । शक्त्या विशिष्यनामभेदबोधाभावेऽपि विशेष्यानामभेदबोधो जायत एव । अतस्तत्त्वमस्यादौ लक्षणा नावश्यकी ।

**अपौरुषेयत्वम्**—ईश्वरद्वारा श्वासोच्छ्वासवदप्रयासेन वेदानामुत्पत्तिः। पुरुषप्रयत्नं विनैवोत्पत्त्या वेदानामपौरुषेयत्वं तेषामाकाशादिवद् नित्यता, न ब्रह्मवत्। न्यायशास्त्रानुसारं वेदानां पौरुषेयत्वम्, मीमांसकास्तु सृष्ट्याद्यभावेन वेदानां नित्यतां स्वीकुर्वन्ति। वेदान्तिनस्त्वाकाशादिवत् प्रलयावधि तेषां स्थायित्वं स्वीकुर्वन्ति।

**अर्थापत्तिपरिच्छेदः**—अर्थापत्तिः प्रमाणं प्रमितिश्च। उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः। यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' अत्र पीनत्वेनोपपाद्येनोपपादकं रात्रिभोजनं कल्प्यते। भोजनाभावे पीनत्वमसम्भवि, अतस्तत्कल्पनम्।

**अनुपलब्धिपरिच्छेदः**-ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम्। नैयायिकास्तु येनेन्द्रियेण यद्वस्तु गृह्यते तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते इति नियमाद् घटाभाववद्भूतलमित्यत्र चक्षुषा गृह्यते भूतलं घटाभावस्य विशेषणत्वाद् विशेष्यविशेषणभावः सन्निकर्ष इति वदन्ति, तन्न घटाद्यभावाकारा वृत्तिर्नेन्द्रियजन्या, इन्द्रियस्य विषयेणासन्निकर्षात्, किन्तु घटानुपलब्धिरूपमानान्तरजन्या इति भवत्यनुपलब्धेः प्रमाणान्तरम्।

**अभावचतुष्टयम्**—प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावः, अन्योन्याभावश्च। तत्र प्रागभावोऽनादिः सान्तश्च, प्रध्वंसाभावः सान्तश्च, अत्यन्ताभावोऽन्योन्याभावश्च नित्यौ। परिभाषायां ब्रह्मणोऽतिरिक्तस्य सर्वस्याप्यनित्यत्वम्। नास्ति किमपि नित्यं वस्तु। कपालनाशेन सहैव नाशः। अत्यन्ताभावोऽन्योन्याभावश्च ध्वंसप्रतियोगिनौ।

**प्रामाण्यस्य स्वतस्त्वम्**—परिभाषाकारेण प्राचीनपरम्परामनुसृत्यैव प्रामाण्यस्य स्वतस्त्वं स्वीकृतम्। न तदर्थमनुमानाद्यपेक्षा।

**विषयपरिच्छेदः**—विषयपरिच्छेदे प्रयोजनपरिच्छेदे च समस्ता सामग्री ग्रन्थकारेण परम्परागतग्रन्थेभ्य एवोद्धृता। अत्र केवलं संकलनम्।

**स्वरूपलक्षणं तटस्थलक्षणं च**—'सत्यं ज्ञानमनन्तं ब्रह्म' इति ब्रह्मणः स्वरूपलक्षणम्। 'यतो वा इमानि भूतानि जायन्ते'[1] इत्यादितटस्थलक्षणम्। पञ्चतन्मात्राद्युत्पत्तौ हिरण्यगर्भोत्पत्तौ च परमेश्वरः प्रधानं कारणम्। सर्वेषां प्रपञ्चानामुत्पत्तौ हिरण्यगर्भः कारणम्।

**बिम्बप्रतिबिम्बवादः**—संक्षेपशारीरक ईश्वरं जीवञ्चोभावपि प्रतिबिम्बत्वेन स्वीकरोति। विवरणकार ईश्वरं बिम्बं जीवं च प्रतिबिम्बं मन्यते। एकजीववादे जीवोपाधिरन्तःकरणम्।

**एकत्वम्**—तत्त्वमस्यादिमहावाक्येषु जीवब्रह्मणोर्विशेषधर्मान् विहाय चैतन्यमात्रस्यैकत्वं सिध्यति। भागत्यागलक्षणया सर्वज्ञत्वाल्पज्ञत्वादिविशेषधर्मान् परित्यज्य चैतन्यमात्रे उभयोरभेदो बोध्यते।

**प्रयोजनपरिच्छेदः**—वेदान्तदर्शनस्य परमं प्रयोजनं परमानन्दप्राप्तिः, दुःखानामात्यन्तिकी निवृत्तिश्च। मोक्ष एवानन्दरूपः, किन्तु स ज्ञानेन विना न साध्यते।

विवरणाचार्यो मन्यते यद् अपरोक्षज्ञानं तत्त्वमस्यादिमहावाक्येभ्यो जायते। अपरोक्षज्ञानं शुद्धमनसा जायत इति वाचस्पतिः। अस्यापरोक्षज्ञानस्य सहायभूता कर्मोपासनादयः साधनचतुष्टयसम्पन्नः प्रमाता एवाधिकारी मोक्षस्य।

१.

**वैशिष्टयम्**—व्यवस्थितरूपेण प्रमाणमीमांसको वेदान्तपरिभाषाग्रन्थ एव। अतः पूर्वं न केनाप्येवं क्रमेण प्रमाणानि निरूपितानि। इयं त्रुटिरनेन ग्रन्थेनापसारिता। ग्रन्थस्यास्य भाषातीव सरला सुमधुरा च, येनाल्पज्ञोऽपि सुतरामिमं ग्रन्थमवबोद्धुं शक्नोति। नैतावता तुच्छत्वमावहत्ययं ग्रन्थः, किन्तु भाषया सरलो भावैश्च गाम्भीर्यमाश्रयते।

अत्र पूर्वाचार्येषु सम्मानना व्यक्तीकृताऽस्ति। तेषां विचारान् परिवर्धितान् प्रस्तौत्ययं ग्रन्थः। अत्र कियन्त्योऽभिनवाः कल्पना जाग्रति।

**मनस इन्द्रियत्वखण्डनम्**—यद्यपि वाचस्पतिमिश्रैर्मनस इन्द्रियत्वं स्वीकृतम्; किन्तु ग्रन्थकारेण तत्र युक्त्याऽरुचिं प्रदर्श्य विवरणाचार्यसम्मतमिन्द्रियत्वं खण्डितम्। अद्वैतसम्प्रदाये प्रायशः सर्वैः 'तत्त्वमसि' इत्यत्र लक्षणा स्वीकृता, ग्रन्थकारस्तु तत्र लक्षणा न स्वीकृता।

**श्रावणप्रत्यक्षम्**—न्यायादिदर्शनेषु प्रायशः सर्वे आचार्या वीचितरङ्गन्यायेन शब्दः कर्णपुरं गच्छति इति स्वीकुर्वन्ति, परं परिभाषाकारः श्रोत्रमेव शब्ददेशं प्राप्नोतीति स्वीकरोति।

**कालस्य प्रत्यक्षत्वम्**—न्यायाचार्याः कालस्य प्रत्यक्षत्वं न स्वीकुर्वन्ति, परिभाषायां तस्य प्रत्यक्षत्वं स्वीकृतम्।

**मायाया एकत्वम्**—मायाविषयेऽद्वैतिनामनेकानि मतानि सन्ति, किन्तु परिभाषायां तस्या एकत्वं तच्छक्तीनामानन्त्यं प्रतिपादितम्।

**पर्वतो वह्निमान्**—परिभाषाकारः कथयति यन्नैयायिकः पर्वतमग्निं चोभावप्यनुमिनोति, किन्तु वह्निरेवानुमातव्यः, न तु पर्वतोऽपि, तस्य प्रत्यक्षविषयत्वादिति।

**अवयवत्रयम्**—परिभाषाकाराः परार्थानुमाने त्रीनेवावयवान् स्वीकृत्य 'अरस्तोः सिलो-जिस्मम्' स्मारयन्ति। अवयवपञ्चककल्पनमतार्किकं कथयन्ति।

**सम्भविनो दोषाः**—एतावता व्याख्यानेन नेदं निश्चितं यदयं ग्रन्थः सामस्त्येन गुणानामाकर एवेति, सम्भविनो केचिद्दोषा अपि प्रदर्श्यन्ते—

(१) ग्रन्थेऽस्मिन् प्रत्यक्षस्याष्टौ भेदाः प्रदर्शिताः। ते सविकल्पादिभेदा ज्ञानगतप्रत्यक्षस्य विषयगतप्रत्यक्षस्य वेति नेदं वैशद्येनोदलेखि।

(२) धारावाहिकबुद्धावनधिगतत्वसिद्धयर्थं नीरूपस्य कालस्यापीन्द्रियवेद्यत्वमभ्युपगतम्। तच्च न केवलमव्यावहारिकम्, किन्तु क्लिष्टमपि।

(३) मनस इन्द्रियत्वनिरसनमप्यसमीचीनम्, न केवलं वाचस्पतिमिश्रविरोधम्, किन्तु गीताविरोधमप्यङ्गीकृत्य कल्पनया कस्याप्यर्थस्य सिद्धिः कर्तुं न शक्यते। 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्र मनसः श्रेष्ठत्वप्रतिपादितम्। न च तस्येन्द्रियत्वखण्डनं कृतम्।

(४) ब्रह्मणो द्रव्यत्वखण्डनावसरे ग्रन्थकारेण नेदं स्पष्टीकृतं यद् ब्रह्म द्रव्यमद्रव्यं वेति। तद्व्याख्यानेनावबुध्यते यत्ते ब्रह्मणो द्रव्यत्वं निषेधन्ति स्वीकुर्वन्ति च।

(५) श्रावणप्रत्यक्ष आधुनिकैर्वैज्ञानिकैः प्रयोगेण तत्साधितं यत् शब्दस्तरङ्गवत् श्रोत्र-देशमभ्येति, किन्तु परिभाषायां प्रत्युत श्रोत्रेन्द्रियमेव शब्ददेशं गच्छति इत्येष सिद्धान्तो न तार्किकाणां चेतो गृह्णाति।

(६) न्यायशास्त्रे पर्वतादिपक्षे वह्निरनुमीयते, न तु पर्वतोऽपि; अत एवात्र सिद्धान्ते वृथैवाक्षेपः।

परिभाषाकारस्याकर्षणं विवरणकारं प्रति प्राचुर्येणाभिलक्ष्यते। अत एव श्रीवाचस्पतिमिश्रविरोधे कतिपययुक्तयः प्रदर्शिताः। मनस इन्द्रियत्वखण्डनं प्रति बिम्बवादादिसिद्धान्ता विवरणाकाराभिमताः। ते च परिभाषाकारेण स्वीकृताः।

**उपसंहारः**

उपरि निर्दिष्टान् सम्भावितान् दोषान् परित्यज्यान्ये विषयाः पूर्वग्रन्थेभ्य एव सङ्गृहीताः। तेषां ग्रन्थानां प्रकीर्णा विचारा एव संकलिताः। प्रथमतः षण्णां परिच्छेदानां सामग्री मीमांसातः परिगृहीता, अन्त्ययोर्द्वयोः परिच्छेदयोः सामग्री वेदान्तग्रन्थेभ्यः।

'तत्त्वमसि' इत्यत्र लक्षणायाः खण्डनं मनस इन्द्रियत्वनिरासो धारावाहिकज्ञानस्यैकत्वम्, अन्वयिमात्रानुमानमिमे सर्वे विचारा महत्त्वपूर्णाः सन्ति। यथा अप्पयदीक्षितैः सिद्धान्तलेशसंग्रहं विरचय्य सर्वेषां प्रमेयाणां विचारान् सङ्ग्रहीतुं प्रायतत, तथैव परिभाषाकारेणापि प्रमाणविषये कृतम्। अस्मिन् ग्रन्थे तथाधिकाधिका विचाराः सङ्कलिताः, येषां ज्ञानेन वेदान्तशास्त्रस्य प्रायशः सर्वे विषया ज्ञाता भविष्यन्तीति।



# संस्कृताभिलेखेषु धर्मस्वरूपम्

डॉ० श्रीपति-अवस्थी

सहायकनिदेशकः, उत्तरप्रदेशसंस्कृत-अकादमी, लखनऊ

विश्वसंस्कृतेरितिहासे भारतीयसंस्कृतेर्विशिष्टतरं स्थानं विद्यते। यत्राऽन्यसंस्कृतयो विनष्टाः कालप्रवाहे विलीनाश्च, तत्र तु भारतीया संस्कृतिरिदानीमपि वर्तते वर्तिष्यते च चिराय।[1] अस्या मूलं धर्मे स्थितम्। बहूनां धर्माणां सम्प्रदायानाञ्चायं देशः[2]। अतः कालक्रमेण प्रवर्तमानानां सर्वेषां धर्मसम्प्रदायानां विवेचनं स्वाधीनकालस्य समुपलब्धैराभिलेखिकसाक्ष्यैः समीकरणमपि क्रियते। एषां धर्मसम्प्रदायानां समुपस्थापनाद् निवेचनात् परीक्षणाच्च प्राग् धर्मस्य परिभाषा, किं तस्य स्रोत इति विविच्यते।

भारतस्य प्रतीक्ष्यचणैर्बहुभिराचार्यैस्तत्त्वदर्शिभिश्च धर्मस्य विभिन्नाः परिभाषाः कृताः। धृञ् धारणे इत्यस्माद् धातोर्धर्मशब्दः सिद्धयति। अतो धारणार्थे पोषणार्थेऽस्यार्थः स्वीक्रियते। अमुमेव व्युत्पत्तिमूलकमर्थमधिकृत्योच्यते—

धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः।
यत्स्याद्धारणसंयुक्तस्स धर्म इति निश्चयः॥

अमरकोशकारेणापि पुण्यार्थे, आचारार्थे, वेदप्रामाण्ययुक्ते, क्रियाकारित्वे च निरूपितो धर्मशब्दः।[3] मेदिनीकोशेऽप्ययमेवार्थः प्रमाणीक्रियते।[4] अस्य विभिन्नार्थेषु प्रयोगो दृश्यते। वैशेषिकदर्शनकारो महर्षिकणादः समुपन्यसति—'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'[5] इति।

'चोदनालक्षणार्थो धर्मः' इति जैमिनिः।[6] आचार एव धर्म इति तैत्तिरीयोपनिषदि।[7] गीतायामपि इदमेव प्रमाणीक्रियते[8]। महाभारतेऽपि धर्मस्य दुर्बोधत्वं गमीरत्वञ्च संकेतितम्।[9] आचार्यमनुनापि धर्मस्याचारत्वमेवाङ्गीकृत्य दशलक्षणात्मको धर्मः प्रतिपादितः।[10] महाभारतस्य शान्तिपर्वणि प्रतिपाद्यते यत् स एव धर्मस्य वेत्ता भवितुमर्हति यः सर्वभूतहितेरतः स्यात्—

---

१. द्रष्टव्यम्—डॉ० राधाकृष्णन् : धर्म और समाज, पृ० ११६।
२. हापकिन्स : रेलिजन ऑव इण्डिया, बोस्टन यू० एस० ए० लंदन, १९०२।
३. अमरकोशे १।४।२४; १।६।३; ३।३।१३९।
४. धर्मोऽस्त्री पुण्य आचारे स्वभावोपययोः क्रतौ।
अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे॥
५. वैशेषिकसूत्रम् १।१।२। ६. मीमांसा—१।२।२। ७. तै० उ० १।११।
८. गीता २।४०। ९. महाभारते यक्षोपाख्याने।
१०. धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्यासत्यमक्रोधो दशकं धर्मलक्षणम्॥

सर्वेषां यः सुहृन्नित्यं सर्वेषाञ्च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥[1]

मानवजीवन आत्यन्तिकसुखोपलब्धिहेतवे भारतीयसंस्कृतौ पुरुषार्थचतुष्टयान्तर्गते धर्मोऽपि वर्गीक्रियते । अत्र हि विशिष्टाङ्गत्वेन धर्मो व्याख्यायते । अथाऽत्र स्मरणीयं यद् भारतीयो धर्मं ऐहिकस्यामुष्मिकस्य च साधनत्वेनैव सर्वदा स्वीकृतो भारतीयधर्माचार्यैर्जनमानसैश्च । अत एव धर्मं प्रति युगानुकूलदृष्टिमङ्गीकृत्य समाजेन विकासवादोऽङ्गीकृतः । धर्मपरिपालनार्थमेवार्थस्य कामस्य वा परित्यागोपदेशो न विधीयते, अपि तु ह्येकस्मिन्नेव पुरुषार्थे व्यासक्तस्य जनस्य निन्दा क्रियते । भारतीयकाव्येष्वपि कविभिर्धर्मस्य स्वरूपं वैशद्येन परिकीर्त्यते । महाकविना भवभूतिना धार्मिकस्फुरणाया वर्णनं महता गौरवेण कृतम् ।[2] वस्तुत आत्मसाक्षात्कार एव धर्मस्य परमपुरुषार्थं इति शास्त्रेष्वभ्युपगम्यते । यतो हि परमात्मा सर्वेषु भूतेष्ववस्थितः ।[3] छान्दोग्योपनिषदि धर्मस्य वर्गविभाजनं दृश्यते । तद्यथा — 'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति'[4] । अनेन विभाजनेन धर्मस्याचारत्वमेवोपलक्ष्यते ।

लोकायतिकानां चार्वाकाणां मते तु धर्मस्य विविधाः क्रिया बुद्धिपौरुषहीनानां जीविकेति स्मृताः ।[5] बौद्धाचार्येण चन्द्रकीर्तिना प्रसन्नपदायां धर्मशब्दार्थो ह्येवं निरूपितः—'धर्मशब्दोऽयं प्रवचने त्रिधा व्यवस्थापितः । स्वलक्षणधारणार्थेन, कुगतिगमनविधारणार्थेन, पाञ्चगतिकसंसारगमनविधारणार्थेन'[6] इति । अस्मिन् हि पारिभाषिकसूत्रे धर्मस्य तत्त्वं बौद्धदृष्टया यथाकथञ्चिद् व्याख्यातम् । नागार्जुनस्योक्तेः 'न हि कदाचित् क्वचित् कश्चिद् धर्मो बुद्धेन देशितः' इत्ययमेवाऽभिप्रायो यत् तथागतेन हेतुसमुत्पन्नधर्माणां हेतुर्देशितः ।[7]

**अभिलेखेषु धर्मस्योल्लेखः**

अभिलेखेष्वपि धर्मशब्दस्य प्रयोगबाहुल्यं दृश्यते । यतो हि सर्वेऽभिलेखा धर्ममेवोद्दिश्य शासकैः प्रवर्तिताः । अस्मात् कारणादेव सम्राड् अशोकः स्वीयेषु लेखेषु **'इयं धम्मलिपी'**[8] इति पदस्य प्रयोगं करोति ।

---

१. म० भा० शान्ति २६१.९ ।

२. ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरि श्रुतं शाश्वतमाद्रियन्ते ।
इष्टाय पूर्ताय च कर्मणेऽर्थान् दारानपत्याय तपोऽर्थमाहुः ॥
—( मालतीमाधवे १.५ )

३. भगवान् वासुदेवो हि सर्वभूतेष्ववस्थितः ।
एतज्ज्ञानं हि सर्वस्य मूलं धर्मस्य शाश्वतम् ॥ ( महा० भा० शा० पर्व० २६१ ) ।

४. छा० उप० २.२३ ।

५. अग्निहोत्रं त्रयो वेदाः प्रव्रज्या नग्नमुण्डिताः ।
बुद्धिपौरुषहीनानां जीवितेऽदो मतं गुरोः ॥ ( नीतिवाक्यामृतम्, पृ० ७६ ) ।

६. प्रसन्नपदा, म० का०, पृ० ३०४ ।

७. द्रष्टव्यम् — म० का०, आर्यतथागतगुह्यसूत्रम् ।

८. प्रथमशिलालेखः, हुल्श; का० इं० इण्डि० I, पृ० २; बूलर एपि० इण्डि० II, पृ० ४४९ ।

अशोकीयाभिलेखेषु धर्मशब्दो बहुत्र प्रयुक्तो दृश्यते[1]। अत्र हि धर्मशब्दस्य प्रयोगः सामान्यत्वेनेष्ट उताहो विशेषत्वेनेति प्रश्नो विशेषेणावधारणीयः। यतो ह्यस्मिन् विषये मतद्वयं प्रसिद्धम्—प्रथमे मते तु महाराजोऽशोकः पूर्वाग्रहं परित्यज्य सामान्यत्वेन धर्मस्य प्रयोगं करोति। द्वितीये मते तु बौद्धधर्ममेवोद्दिश्य धर्मशब्दस्य प्रयोगः कृतः। अशोकीयाभिलेखेषु यो हि धर्मः प्रतिपादितः, स तु राजधर्म इति फ्लीटमहोदयस्याशयः[2]। सामान्यमानवतावादी किलाचारप्रतिपादक इति राधाकुमुदमुखर्जी[3]। बौद्धो धर्म इति डॉ० भण्डारकरः[4]। धर्मशब्देनाशोकस्य कोऽभिप्राय इत्यस्मिन् विषये किमपि निश्चयेन वक्तुं न शक्यते। अथात्र नैको विद्वान् यस्य वचः प्रमाणम्। यद् भवतु तद् भवतु नाम। एतत्तु विदुषां मते सुनिश्चितमेव यदशोकीयाभिलेखेषु 'धर्मयात्रा-धर्ममङ्गल-धर्मशासन-धर्मदानादयः शब्दा धर्मस्य सामान्यवाचकत्वेनोल्लिखिताः सन्ति।

सर्वेषु धर्मसम्प्रदायेषु यः सामान्यार्थो धर्मशब्देनाभिप्रेतः, स एवात्रापि ग्रहणे नास्ति काचिद् विप्रतिपत्तिः। एवं हि क्रमेण सातवाहननरेशस्याभिलेखः[5] 'धर्माय नमः' इति पदेन प्रारभ्यते। रुद्रदाम्नो[6]ऽभिलेखस्तु धर्मकीर्तिवृद्ध्यर्थमेवोल्लिखितः। गुप्तमहाराजस्य स्कन्दगुप्तस्य [7]जूनागढलेखो धर्मादपेतस्य मनुजस्याभाव इति वर्णने धर्मप्रभावं द्योतयति। अन्यस्मिन् लेखे परलोकयाने धर्मः सखा परमिति समुल्लिखितं विद्यते[8]। एवमन्यत्रापि धर्ममधिकृत्य बहव उल्लेखास्सन्ति।

कानि हि स्रोतांसि धर्मस्य? कस्मात् तेषामागमोऽभवदित्यस्मिन् विषये मनुरेव प्रमाणम्[9]। आचार्यमनोर्मते वेदाः, स्मृतयः, स्मृतिविदः, पवित्रान्तःकरणानि चैतानि धर्ममूलानि भवन्ति। वेद एव धर्ममूलमिति सर्वैरपि स्वीक्रियते। श्रुतिप्रमाणको धर्म इति हारीतः। वेदानामपौरुषेयत्वमिति प्रसिद्धं समस्ते संस्कृतसाहित्ये, सर्वैरप्यभ्युपगम्यते च। पाश्चात्त्यविवेचनदृशाऽपि वेदानामतिप्राचीनत्वमङ्गीक्रियते विद्वद्भिः। वेदाननादृत्य भारते कोऽपि धर्मवेत्ता भवितुं नार्हति। वैदिकमन्त्राणां सारल्यं सुप्रथितमेव। एते मन्त्रवर्णाः श्रद्धया भक्त्या च

---

१. अशोकस्य, तृ० शिला०-पञ्चम-अष्टम-दशम-एकादश-द्वादश-त्रयोदश-चतुर्दशशिलालेखाः; का० इं० इण्डि० I, पृ० ५।

२. जे० आर० ए० एस० भाग IX, पृ० १५१, १८७; तदेव १९०८, पृ० ४९, १२ च।

३. द्रष्टव्यम्—अशोक; आर० के० मुखर्जी, पृ० ६०।

४. भण्डारकरः, दे० रा०, अशोक ६७. विशेषेण सेनारहुल्शलेखा द्रष्टव्याः।

५. द्रष्टव्यम्—नानाघाट-अभिलेखः।

६. रुद्रदाम्नो जूनागढ-अभिलेखः।

७. तस्मिन्नृपे शासति नैव कश्चिद् धर्मादपेतो मनुजः प्रजासु। (का०इ० इण्डि० III, पृ०५८)

८. प्राणास्तृणाग्रजलबिन्दुसमा नराणां धर्मः सखा परमहो परलोकयाने।
( एपि० इण्डि०, भाग ३१, पृष्ठ १८३ )

९. वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनां स्वस्य च प्रियमात्मनः॥ ( मनु० २।६ )

विश्वासेन निश्चयेन च परिपूर्णाः सन्ति। मन्त्रेषूदात्तभावानां प्राचुर्यम्, शाश्वताशानां बाहुल्यम्, भाविजीवनं प्रति वैशिष्टयेन ममत्वं च विद्यते। तेषामृषीणां गाम्भीर्यमनुमातुमपि न शक्यते, येषां मुखैः सर्वप्रथममुच्चरितमभूत्–'असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमय' इति।

वेदानामनन्तत्वं स्वीकृतं भावाभिव्यञ्जकत्वाद् उच्चकल्पनाया अनुभूतेरुदात्तत्वाच्च। आर्षपरम्परायां वेदप्रामाण्यं सर्वतोभावेनाङ्गीक्रियते। सर्वेऽपि षड्दर्शनप्रतिपादका महर्षयो वेदप्रामाण्यस्वीकारे ऐकमत्यं स्थापयन्ति। मीमांसाशास्त्रप्रतिपादकाः कुमारिलप्राभाकराः, अद्वैतवेदान्तप्रतिपादका गौडपादाचार्य-शङ्कराचार्यप्रभृतयो मनीषिणो वेदानां स्वतःप्रमाणत्वमङ्गीकुर्वन्ति। 'श्रुतिश्च द्विविधा—वैदिकी तान्त्रिकी च' इत्युक्त्वा द्विधा प्रमाणपरताऽभ्युपगता वेदानाम्[1]। अनेन प्रमाणेन वेदैः सह तन्त्रशास्त्रस्यापि समीकरणं दृश्यते। इयं हि परिकल्पना परवर्तिकालस्य सृष्टिरिति मन्तव्या। यतो ह्यस्मिन् तन्त्रस्य प्राधान्यमुपदिश्यते। अत्रेदमपि समुल्लेखनीयं यद् भारतीयधर्मशृङ्खलासु सन्ति केचन सम्प्रदाया ये खलु वेदप्रामाण्यं प्रति सङ्कोचं प्रदर्शयन्ति। चार्वाकाः, जैनाः, बौद्धाश्च वेदविरोधिन इति सामान्यतोऽभ्युपगम्यते। मनुस्मृतिभाष्यकारेणाचार्यमेधातिथिनाऽपि केषाञ्चिद् वेदविरोधिनां सम्प्रदायानां नामानि स्मृतानि। यथा हि भोजकाः, पाञ्चरात्रिकाः, अनर्थवादिनो निर्ग्रन्थाः, पाशुपताश्चेति[2]। एते हि वेदप्रामाण्ये सङ्कोचशीलाः सन्ति।

अन्तःकरणस्य स्वतः स्फूर्तप्रेरणया श्रुतयो जाताः। तासां तर्कसङ्गतव्याख्यानभूताः स्मृतयः प्रसिद्धाः। न हि वैदिकसंहितासु लक्षणप्रमाणावलीभिः परिच्छिन्नो धर्मो व्याख्यातः। धर्मस्यावधारणार्थमेव स्मृतेरवतारः। धर्मस्य व्यवस्थितस्वरूपनिर्धारणार्थमेव स्मृतीनां कालक्रमेण विकासो जात इति स्वीक्रियते वेदपारगैः। फलतो विभिन्नाः स्मृतयो विद्यन्ते। सर्वासु स्मृतिषु तु मनुस्मृतेः प्रामाण्यं सर्वाभिः स्मृतिभिः परिसंख्यातम्। परस्परविरुद्धे सति स्मृतिप्रामाण्ये मनुस्मृतेः प्रामाण्यं ग्राह्यम्। एवं श्रुतिस्मृतिविरोधसमकाले श्रुतेः प्रामाण्यमिति।

स्मृतीनामध्ययनेन ज्ञायते यत् स्मृतिषु धर्मशब्दो वादनिर्णयार्थं 'कानून' इत्यर्थेऽपि प्रयुक्तः। यतो हि सर्वासु स्मृतिषु राजधर्मस्य, व्यवहारदायादीनां वर्णनं प्राप्यते। अतो धर्मस्य व्यवहारसीमा देशकुलजातिपरम्परापर्यन्तमपि व्यवह्रियते। अस्मात् कारणादेव प्राचीनभारतस्य राजानः प्रजानां परम्परागतेषु नियमेषु व्यवहारेषु वा हस्तक्षेपं न कुर्वन्ति स्म।

लोकविरुद्धं कार्यमाचरणं वा परित्यज्यान्यत्र प्रजाः स्वधर्मपालने सर्वथा स्वातन्त्र्यमनुभवन्ति स्म।[4]

महापुरुषैः प्रतिपादितमाचरणं चारित्र्यं वाऽपि धर्मस्याङ्गत्वेन स्वीकृतम्। महाभारते श्रुतीनां वैभिन्यं तर्कस्याऽप्रतिष्ठत्वं मुनीनां वैमत्यञ्चापि प्रतिपादितत्वाद् अभ्युपगम्यते यच्छ्रेष्ठ-

---

१. मनुस्मृतिटीकाकारेण कुल्लूकभट्टेनोद्धृतम्—म० स्मृतिः- २।१।
२. मनुस्मृतिः, मेधातिथिटीका २।६। ३. देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम्।
४. याज्ञ० स्मृतिः १।३४१–४३।

पुरुषविहितमार्गोऽपि धर्मविनिश्चयाय प्रमाणभूतो भवति[1]। आप्तकामो निःस्पृहः साधुरपि धर्मप्रमाणभूत इति वशिष्ठः[2]। धर्मसूत्रकारा अपि तथोक्तं मतं प्रमाणीकुर्वन्ति[3]। स्मृतिशास्त्रेण प्रमाणभूतोऽपि सन् लोकविरुद्धो धर्मो न ग्राह्य इति याज्ञवल्क्यः[4]। चिरकालात् प्रवर्तितपरम्परापालनं कर्तव्यमिति बृहस्पतिः[5]। मनुनाऽपि स्वीये धर्मशास्त्रे विविधा धर्मा व्याख्याताः। एते सर्वे धर्मविशेषा लोकप्रवृत्तिमधिकृत्यैव शास्त्राविरुद्धत्वं प्रमाणत्वञ्च स्थिरीकुर्वन्ति। युक्तियुक्तस्वीकरणे खलु हिन्दुसमाजस्य प्रवृत्तिः सर्वदा प्रसिद्धा। अस्मात् कारणादाप्तकामो निःस्पृहश्चैको विद्वान् धर्मे प्रमाणभूत इत्यवगम्यते। धर्मेषु प्रमाणभूतैराचार्यैः प्रवर्तिता परम्परा वेदवत् प्रामाण्यं भजते[8]। एक एव धर्मज्ञः पुरुषो धर्मविनिर्णयार्थमलमिति मनुः[9]।

धर्मविनिश्चयार्थं पवित्रान्तःकरणप्रवृत्तिरपि प्रमाणभूतेत्यभ्युपगम्यते, सर्वस्मृतिशास्त्रसिद्धत्वात्। हृदयेनाभ्यनुज्ञात इति मनुप्रोक्तत्वात्।[10] अन्तःकरणस्य प्रत्यक्षप्रेरणाया यदा हि कोऽपि कर्मरतो भवति, तदा तत्तत्कर्मणः स्वत एव धर्मवत्प्रामाण्यमङ्गीक्रियते।[11] आपद्धर्मेऽन्तःकरणप्रवृत्तिप्रामाण्यस्वीकारे भारतीयधर्मस्य क्वचिदपि संकोचो न विद्यते। श्रूयते महर्षिविश्वामित्रेण प्राणरक्षायै श्वानमांसस्य भक्षणं कृतम्। उषस्तिमहर्षिणोऽग्रहारस्योच्छिष्टमाषाणि भक्षितानि।[5] अभिज्ञानशाकुन्तले कण्वतनयां शकुन्तलां प्रति स्वामासक्तिम् अन्तःकरणप्रवृत्तिबलादेव दुष्यन्तः प्रमाणभूताममन्यत।[12]

अत्रोच्यते—अन्तःकरणप्रवृत्तिरन्धभावावेशेन सह कथमपि न प्रशस्यते। युक्तिहीनो विचारः शास्त्रसम्मतोऽपि हेय इति बृहस्पतिः[13]। युक्तियुक्तस्य तथ्यस्य धर्मत्वमिति मनुः[14]।

---

१. तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको मुनिर्यस्य वचः प्रमाणम्।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥
(महा० भारतम्, यक्षोपाख्यानम्)

२. वशि० स्मृ० १।६; ३. आश्व० धर्म० १।७।१।

४. याज्ञ० स्मृ० १।१५६; ५. बृह० स्मृ० २।२९।३१।

६. देशधर्मान् जातिधर्मान् कुलधर्मांश्च शाश्वतान्।
पाषण्डगणधर्मांश्च शास्त्रेऽस्मिन्नुक्तवान् मनुः॥ (मनु० स्मृ० १।११८)

७. मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम्।
वेदवृत्तेषु स्नातां मे को हि परिषद् भवेत्॥ (परा० स्मृ० ८।३)

८. धर्मज्ञः प्रमाणम् (मनु० स्मृ०); ९. तदेव २।६; याज्ञ० स्मृ० १।९।

१०. स्यादेको वाऽध्यात्मवित्तमवित्तमः; ११. छान्दो० उप० १०।१-४।

१२. शाकु० १।२१।

१३. केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः।
युक्तिहीने विचारे तु धर्महानिः प्रजायते॥ (बृह० स्मृ०)
द्रष्ट०—के० वी० आयङ्गरेण लिखितो राजधर्मः १९४१ ई०, पृ० ११४।

१४. आर्षधर्मोपदेशं च वेदशास्त्रविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ (मनुः—१२।१०६)

धर्मानुमोदितो लोकनिन्दितो व्यवहारः सर्वथा परित्याज्य इति मेधातिथिः[1]। अत एवाभ्युपगम्यते यत् पवित्रान्तःकरणप्रवृत्तिर्यदि युक्तिसंवलिता, पक्षपातविरहिता, तर्हि सा वेदवत् प्रामाण्यं भजते।

उपर्युक्तपङ्क्तिषु धर्मस्रोतसां धर्मशास्त्रकाराणामुक्तीरधिकृत्य विवेचनं समुपस्थापितम्। साम्प्रतं त्ववीचीनानामितिहासविदामैतिहासिकविवेचनपद्धतिमाश्रित्य भारतीयधर्मस्रोतांसि विविच्यन्ते।

भारतीयधर्मस्य स्वरूपनिर्धारणार्थं प्रथमस्तावद्वैदिकसाहित्यानुशीलनं स्यादित्यस्मिन् प्रसङ्गे ऋग्वेदस्य महत्ता पुरो धावति। अस्यां संहितायां देवस्तुतिविधायका अनेके मन्त्राः सङ्कलिताः सन्ति। ऋग्वेदस्य को रचनाकाल इति महद्विवादास्पदप्रश्नस्य विवेचनमनभिप्रेतत्वाद् धर्मविनिश्चयाय स्रोतांस्येवाभिधीयन्ते। अत्र तु तान्येव स्रोतांसि वर्णनीयानि, येभ्यो धर्मस्य परिज्ञानं भवितुमर्हति।

प्रसङ्गेऽस्मिन् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति चत्वारो वेदाः प्रामुख्येन गण्यन्ते। एताः सर्वा मन्त्रसंहिता भारतीयधर्मस्य मूलत्वेन सन्ति। एतदनन्तरं विविधा ब्राह्मणग्रन्थाः— शतपथ-साम गोपथ-ऐतरेय-तैत्तिरीय-पञ्चविंश-षड्विंश-ताण्ड्य-प्रभृतयः प्रसिद्धाः सन्ति। ह्येते ब्राह्मणग्रन्थाः संहिताभागस्य व्याख्यानरूपाः सन्ति। 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्येके[2]।

साम्प्रतं सन्ति बहवो विद्वांसो ये खलु ब्राह्मणानां वेदत्वं न स्वीकुर्वन्ति, स्वतः परतः प्रमाणभेदात्। तदुत्तरवर्तिन आरण्यकाः, उपनिषदश्च सन्ति। अत आरण्यकसहिताः सोपनिषत्का मन्त्रब्राह्मणात्मका वेदा धर्मस्य विवेचने प्रमाणभूताः सन्ति। धर्मगृह्यसूत्राणां धर्मनिर्वचने महत्त्वपूर्णा भूमिका विद्यते। एतेषां धर्मसूत्राणां विपुलराशिर्विद्यते। येषु कर्मकाण्डविषयमधिकृत्य महता समारम्भेण विवेचनं दृश्यते।

धर्मशास्त्रेषु स्मृतयोऽपि गण्यन्ते। अनेकाः स्मृतयः प्रसिद्धाः सन्ति। तासु स्मृतिषु मनु-याज्ञवल्क्य-पराशर-शङ्खलिखिताः स्मृतयो विशेषेण प्रसिद्धाः सन्ति। यद्यपि कालक्रमेण स्मृतीनां पौर्वापर्यविवेचनं तु सर्वथा दुष्करमेव, तथाप्येतासु हिन्दुधर्मस्य सुव्यवस्थितस्वरूपं विद्यते।

परवर्तिनि काले रामायणमहाभारतयोर्द्वयोः काव्ययोर्महती प्रतिष्ठाऽभवत्। समस्तानां लौकिकधर्माणां विवेचनादस्य काव्यस्य हिन्दुधर्मस्य विश्वकोशत्वमिति प्रमाणीभवति। पौराणिकसाहित्यस्यापि महत्त्वं सम्प्रदायानां विवेचनप्रसङ्गे स्वत एव पुरो धावति। चतुर्लक्षश्लोकेषु पुराणसाहित्यराशिर्विद्यते। एषु पुराणेषु परवर्तिनि काले समुत्पन्नानां सर्वेषां सम्प्रदायानां वर्णनं प्राप्यते[3]।

---

१. मिताक्षरा—१।३।४।

२. द्रष्टव्यम्—'मन्त्राश्च ब्राह्मणाश्च वेदः' (शाबरभा० २।१।३३)।
'वेदानुवचनेन मन्त्रब्राह्मणाध्ययने' (बृह० उप० भाष्यम् ४।४।२२, आनन्दाश्रमतन्त्र-वार्त्तिकम्, सिद्धान्तनिवृत्तिः, एसि० सो० कलकत्ता, पृ० ३४७; भा० २, बालक्रीडा; मनु० २।६; मन्त्रब्राह्मणात्मको वेदः, तैत्तिरीयसंहिता सायणभाष्यम्; विशेषविवरणम्—वै० वाङ्० का इतिहास, पृ० ९४।

३. अष्टादशपुराणेषु दशभिर्गीयते शिवः।
चतुर्भिर्गीयते ब्रह्मा द्वाभ्यां देवी तथा हरिः॥ (स्क० पु० केदारखण्डे-१)

विभिन्नसम्प्रदायाचार्यैर्लिखिताः स्वसम्प्रदायपोषकाः परमतखण्डनपरा ग्रन्था अपि धर्मनिर्णयार्थं प्रमाणत्वेन गृह्यन्ते ।

जैनधर्मस्यापि स्वकीयं विशिष्टं साहित्यं विद्यते । इयं हि जैनश्रुतिर्यन्महावीरस्वामिना प्रोक्ताः सर्वाः शिक्षाश्चतुर्दशपर्वेषु सङ्कलिताः । महावीरनिर्वाणानन्तरम् ८२७–८४० वर्षयोर्मध्य आपतिते भयङ्करदुर्भिक्षेऽनेके जैनविद्वांसः पञ्चत्वं गताः । अतो जैनसाहित्यपुनर्लेखनहेतोरेकतस्तु मथुरायां वलभ्यामपरतश्च युगपदेव जैनसङ्गीतेः समायोजनमभूत् । मथुरासङ्गीतावार्यस्कन्दिलो वलभिसङ्गीतौ च नागार्जुनसूरिरध्यक्षपदवीं समलङ्चक्रतुः[1] । अनेन समुद्धरणेनाभ्युपगम्यते यज्जैनसाहित्यमपि विभिन्नकालेषु विभिन्नासु सङ्गीतिषु पृथक् पृथग्विरचितत्वाद् वैभिन्यविभ्रमैः परिपूर्णम् । महावीरस्वामिनो निर्वाणस्य ९८० तमे ९९३ तमे वर्षे वा देवर्द्धिनामधेयस्य महात्मनो साभापत्ये समायोजितायां सङ्गीतौ सर्वे जैनग्रन्था लिपिबद्धा अभवन् । लेखनेन सहैव पाठभेदा मतभेदा अपि अङ्गीकृताः । जैनागमेषु द्वादशाङ्गानि प्रसिद्धतराणि ।

आचाराङ्गसुत्त समवायाङ्गसुत्त-धम्मकहा-उवासगदशाओ–सूयदङ्गसुत्त-ठाणङ्गसुत-भगवती-सुत्त-अणुतरो-ववाइमदशाओ-पण्हावागरणाइम-प्रभृतयो ग्रन्था जैनधर्मस्य प्रमाणभूतां सूचनां प्रकटयन्ति । एतानि सर्वाण्यङ्गान्युपाङ्गेषु विभक्तानि । एवं दक्षप्रकीर्णानि षट्छेदसूत्राणि, चतुराणि मूलसूत्राणि, एकं वन्दिसूत्रम्, एकमनुयोगद्वारमिति सूत्राणि प्रसिद्धानि । बहवो व्याख्यानग्रन्थाः सन्ति । ते सर्वे निर्युक्तिभाषा-चूर्ण-टीकादिनामभिः प्रसिद्धाः । एतेषां ग्रन्थानां विषयो विस्तरेणानभिप्रेतत्वात् तावत् संक्षेपेणोदाहृतः ।

बौद्धानां धार्मिकसिद्धान्ताः प्रामुख्येन त्रिपिटकेषु ( विनयपिटक-अभिधम्मपिटक-सुत्त-पिटकेषु ) समुल्लिखिताः सन्ति । त्रिपिटकानामपि सङ्कलनं विभिन्नबौद्धसङ्गीतिषु जातम् । विनयपिटके भिक्षुभिक्षुणीनां कृते यमनियमादीनां विधानम् । अभिधम्मपिटकस्य रचना तु परवर्तिकालीना प्रतीयते । यतो ह्युभयोः पिटकयोः केचनांशा उभयथा सङ्गृहीताः । एषु पिटकेषु सुत्त-निपात-विभङ्ग-वग्ग-जातकादयो विद्यन्ते । तेषां पूर्णविवेचनमत्र नेष्यते, विषयबाह्यत्वात् । मिलिन्दपञ्हो-दीपवंश-महावंशादयोऽपि समुल्लेखनीयाः सन्ति । महायानीयसम्प्रदायग्रन्थास्तु संस्कृतभाषायां प्राप्यन्ते । ललितविस्तरः, अश्वघोषविरचितं बुद्धचरितम्, सौन्दरानन्दः, दिव्यावदानादीनि बौद्धधर्मस्य प्रमाणभूतानि पुस्तकानि सन्ति ।

उपर्युक्तप्रकरणे धर्मस्रोतसां समुल्लेखः कृतः । स्वाधीतकालान्तर्गतसमागतेषु शिलालेखेष्वपि धर्मस्य व्यावहारिकः पक्षः स्फुटीभवति । कस्मिन् काले कस्य धर्मविशेषस्य कीदृशी दशाऽऽसीत् । राजकीयसाहाय्येन को धर्मः समुन्नतिं प्राप्त इति सर्वं सप्रमाणम् आभिलेखिक-साक्ष्यैरेवावगम्यते । यथा हि सम्राड् अशोको बौद्ध आसीदित्याद्यभिलेखिकसाक्ष्यैरेव प्रमाणीभवति । अतः प्रत्येकधर्मप्रकरणेऽभिलेखेषूपलब्धप्रमाणानि समधिकृत्य विवेचनं भविष्यति । एवं हि क्रमेण वैदिक-जैन-बौद्ध-शैव-वैष्णव-शाक्त-सौर-सम्प्रदायानां विवेचनस्य समुपस्थापनं सम्पत्स्यते ।



१. नन्दिचर्णिः ज्योतिष्करण्डकटीका–४१ ।

# अन्तःसाक्ष्यानुसारेण श्रीमद्भागवतस्य स्वरूपसमीक्षणम्

श्रीविन्ध्येश्वरीप्रसादमिश्रः 'विनयः'

अनुसन्धाता, संस्कृतविभागस्य, काशीहिन्दूविश्वविद्यालये

ज्ञानमूलं क्रियास्कन्धं भक्तिशाखासमन्वितम् ।
रसपर्णात्मकं वन्दे श्रीमद्भागवतं तरुम् ॥

श्रीमद्भागवतमस्ति भारतीयमनीषायास्तादृक् परिणतं फलम्, यस्मिन्नस्याः सम्पूर्णमपि ज्ञानमानन्देन सम्पुटीभूय परममधुररसरूपेणाद्यापि भावुकरसिकानां श्रुतिपेयतामुपयाति । अद्यापि यस्मिन् मोमुह्यन्ते नानामतमतान्तरकषायितान्तःकरणा अशरणा जनाः, अद्यापि यत्र शान्ति प्राप्नुवन्ति विवादकटुकुड्मलास्वादचेखिद्यमानमानसा मनीषिणः, तथेदानीमपि यत्र परां निर्वृत्तिमनुभवन्ति श्रीनन्दनन्दनलीलाकलनैकधियः सुधियः परमभाग्यवन्तः सन्तश्च ।

ईदृशी सार्वभौमरसवत्ता विश्वसाहित्ये दुर्लभा एवास्ति; तथाप्यस्य वैशिष्ट्यमस्ति यदेतत् सम्प्रदायगतसंकीर्णतासरणिमननुसृत्यैव परमसत्यस्य प्रतिपादनं करोति[1] । वैदिकरहस्यानामुद्घाटनं कृत्वाऽप्ययं ग्रन्थः सर्वेषामपि स्वात्मकल्याणायाधिकारप्रदाने मुक्तहस्त एव प्रतिभाति । एतस्मिन् प्रतिपादिता कृष्णकथा मानवस्यानादिकालानुगतामानन्दानुसन्धित्सामभूतपूर्वरूपेण समुत्तरयति, तस्य निखिलानुतापानां तात्कालिकमैकान्तिकञ्चोपशमं विदधाति । अतः कथनमिदं नातिशयोक्तिमूलकं यत् प्रतिपाद्य-प्रतिपादनदृष्ट्या श्रीमद्भागवतं विश्वस्याभूतपूर्वं ग्रन्थरत्नमस्तीति ।

यतो ह्ययं ग्रन्थः पुराणपदवीमनुगच्छति, अत एवानुसन्धातृभिः पाश्चात्यपौरस्त्यविद्वद्धौरेयैर्न केवलमस्योपेक्षणमेव कृतम्, अपि तु ग्रन्थस्यास्य विषये बह्व्यः कल्पना जल्पितभणितयोऽपि समुपकल्पितास्तैः । यामिहर्तचैतन्यलोचनाः साम्प्रतिका अपि भारतीयविद्वांसो न न्याय्यवचनपद्धतिमनुसर्तुमीहन्ते, न वा सूक्ष्मधियाऽऽलोचनायां बद्धपरिकरा भवन्ति; किन्तु तेषामेव सिद्धान्तमनुसरन्तः श्रीमद्भागवतस्यापि निर्माणादिविषये नैकशो विसङ्गतवचनपरिपाटीं समुदीरयन्तीति नूनं महत्खेदस्य विषयोऽयम् ।

यस्य कस्याप्यार्षग्रन्थस्य समीक्षणे बहिःसाक्ष्यसमनन्तरमेव तद्ग्रन्थस्यान्तःसाक्ष्यमपि प्रमाणसरणिमागन्तुमर्हति, यतो भारतीयर्षयः केनापि कारणेनासत्यवस्तुनिबन्धने समुत्साहशीला सञ्जाता इति न प्रेक्षवतां स्वीकरणीयमिदानीमपि । तथ्यदर्शनाद् तद्वर्णनाच्चैव तेषामृषित्वम् । अत एव पुराणादिषु तैर्यल्लिखितम् तद् यदि प्रक्षेपरूपेण सिद्धं नास्ति, तद् येन केनापि रूपेण तथ्यात्मकमेव, न केवलं लौकिककविकल्पनाभणितिमात्रमिति स्वीकार्यम् ।

भारतीयः साधारणः कविरपि ऋषित्वमप्राप्य कविर्भवितुं न शक्नोति, अतः श्रौतार्थानां सम्पादकस्य भगवान् कृष्णद्वैपायनव्यासदेवस्य पुराणभारत्याम् असत्यकल्पनाया लेशमपि न

---

१. 'सत्यं परं धीमहि' श्रीमद्भागवतम्—१।१।१ एवं १२।१३।१९ ।

स्वीकरोति किलास्माकं परम्परा; तथापि स्थूलदृष्ट्यैकबद्धादरा: 'विलसन'प्रभृतिपाश्चात्य-समीक्षकास्तदनुवर्त्तिन: केचन भारतीयाश्च पुराणेतिहासविषये केवलं मुद्राशिलालेखादिबहि:साक्ष्यं किं वा साक्ष्याभासं स्वकीयमनुमानमेव प्रमाणं स्वीकुर्वन्त: पुराणादिकानां स्वनिर्माणादिविषयिणी-मन्त:साक्ष्यप्रणालीं न केवलमस्वीकुर्वन्ति, अपि तु तां बालमणितिमिवोपहासभाजनीं कृत्वा पारम्परिकपण्डितमण्डलीं 'गतानुगतिकपदवीमनुगता' इति स्वैरमुद्घोषयन्ति ।

श्रीमद्भागवतस्यापि निर्माणादिविषये सम्प्रति तेषां या विप्रतिपत्तय: श्रूयन्ते, ता: सर्वा एव बहि:साक्ष्याभासे कल्पनाविलासे वा समुपकल्पिता: सन्ति । न तास्वेकाऽपि श्रीमद्भागवत-स्यान्त:साक्ष्यसरणिमाद्रियते । न च स्वीकरोति परम्परालब्धसनातनाचार्यपुरस्कृतां बहि:-साक्ष्यपरिपाटीमिति । अत एव ग्रन्थरत्नमिमं केचन वोपदेवकृतं[1] केचिच्च 'आलवार'भक्तानां तामिलगीतप्रभावितं द्राविडं ग्रन्थमिति मन्यन्ते ।

वयमत्रानुसन्धानदृष्ट्याऽन्त:साक्ष्यपद्धतिं पुरस्कृत्य श्रीमद्भागवतस्य वर्त्तमानस्वरूपसमीक्षणे प्रयत्नं विदधाम: । येन यदार्थसत्यं तदप्यनावृतरूपेण विदुषां दृष्टिपथमायातु, तथाऽस्मिन् विषये लब्धाधिकारा मनीषिण: समधिकतया रहस्यजातमुद्घाटयन्त्विति ।

**भागवतस्य परिभाषा परम्परा च**

भगवत इदं भागवतमिति, भगवच्छब्दाद् भावार्थे अण्प्रत्यये सति शब्दोऽयं निष्पद्यते । यत्किमपि भगवत्सम्बन्धी भवति, तत्सर्वमपि (ज्ञानम्) 'भागवतम्' इति कथयितुं शक्यते । भगवच्छब्दाद् यस्य'या देवताऽथवाऽपत्यार्थेऽपि 'अण्' स्वीकृत्य भागवत इति कृत्वा वयमनयैव प्रकृतिप्रत्ययपद्धत्या भगवदंशजातं जीवमपि स्वीकर्तुं शक्नुम:[2] ।

स्वामिश्रीमदखण्डानन्दसरस्वतीप्रभृतयो भागवततत्त्वज्ञा: 'भागवतम्' इति शब्देन भगवत्प्रोक्तमपि गृह्णन्ति[3] । अत: समुदितरूपेण व्याहर्तुं पारयामो वयं स्वयं भगवता स्वांशभूतस्य जीवस्याज्ञाननिद्राभङ्गाय तस्मै स्वतत्त्वभूतं यज्ज्ञानमुपदिश्यते, तदेव भागवतमिति संज्ञितं भवतीति सिद्धम् ।

इदानीं क: पुनर्भगवत्पदार्थं इति प्रश्नोऽपि सुतरां जागर्ति । अत एवास्यापि व्युत्पत्ति-लभ्योऽर्थ: पुराणकारदिशाऽत्र प्रदर्श्यते—

ऐश्वर्यस्य समग्रस्य धर्मस्य यशस: श्रिय: ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा[4] ।।

इत्यैश्वर्यादीनां षण्णां समवाय एव 'भग:' इति । एतेन षट्समवायेन योऽशेषरूपेण नैरपेक्ष्येण च युक्तो भवति स एव प्राधान्येन भगवानिति व्यपदेशभाग् भवति । अवस्थेयं न सम्भवति यस्य कस्यापि सामान्यजीवस्येति लोकप्रामाण्यादेव स्फुटीभवति । अत: परमतत्त्वमेव वस्तुतो भगवत्पदवाच्यं सम्भवति, तदेव तत्त्वविद्भिर्नैकरूपेणाभिधीयते, यथा—

---

१. ख्रीस्तस्य त्रयोदशे शतके ।
२. ममैवांशो जीवलोके जीवभूत: सनातन: ( गीता—१५।७ )
३. द्रष्टव्यमस्ति, 'भागवत रहस्य' (हिन्दी) पृ०–४०, सत्साहित्य प्रकाशन ट्रस्ट बम्बई १९७१.
४. विष्णुपुराणम्—६।५।७४ ।

वदन्ति तत्तत्त्वविदस्तत्त्वं तज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते[1] ॥

ज्ञानमयस्यास्य भागवतस्य परम्परा श्रीमद्भागवत एव सम्प्राप्यते । तद्यथा पूर्वमयं ज्ञानप्रदीपो भगवता नारायणेनैव पाद्मकल्पारम्भे पद्मोपरि संस्थिते सिसृक्षाविमूढब्रह्मणे प्रदत्तः । पश्चाद् ब्रह्मरूपेण तेनैव (भगवता नारायणेनैव) देवर्षिनारदायोपदिष्टमिदं ज्ञानम्, तेनैव नारदरूपेण कृष्णद्वैपायनव्यासाय प्रदत्तमिदम्, तेनैव च व्यासरूपेण शुकाय, पश्चात्तेनैव शुकरूपेण परीक्षिते दत्तमिति सर्वत्रैवास्य भगवत्प्रोक्तत्वमुपसङ्घटते[2] ।

ध्यातव्यमस्ति यद् यदा यदांऽशी जीवः स्वकीयां स्वरूपविस्मृतिमाप्नुवन् स्वकार्यविषये किंकर्त्तव्यविमूढश्चाभवत्, तदा तदा निमित्तभूतेन स्वयं परमेश्वरेणैव ज्ञानमिदं प्रकाशितम् । वयमत्र सारणीपद्धत्या विनिर्दिशामो यत् केन प्रकारेण श्लोकस्यास्य प्रकृतिविषये सङ्गतिर्भवतीति ।

| क्रमः | वक्तारः | तेषां भगवत्ता | श्रोतारः |
|---|---|---|---|
| १. | श्रीनारायणः | साक्षाद्भगवानेव | सिसृक्षाविमूढः परमेष्ठी प्रजापतिः (ब्रह्मा) द्रष्टव्योऽस्ति श्रीमद्भागवतस्य द्वितीयस्कन्धान्तर्गतो नवमोऽध्यायः । |
| २. | भगवत्तत्त्वसम्पन्नः परमेष्ठी प्रजापतिः | भगवतो गुणावतारः[3] | मायाविविदिषुः देवर्षिनारदः[4] । |
| ३. | देवर्षिनारदः | भगवतश्चतुर्विंशत्यवताराणामेकः (ऋषिसर्गस्यावतारः)[5] | अशान्तचेताः, अकृतकृत्यमना महर्षिद्वैपायनो व्यासः। (श्रीमद्भागवतस्य प्रथमस्कन्धान्तर्गतचतुर्थाध्यायस्य २८, ३०, ३२ श्लोका द्रष्टव्याः) |
| ४. | प्रशान्तचित्तमहर्षिः कृष्णद्वैपायनो व्यासः | भगवतो युगसन्धिसम्भूतो व्यासावतारः[6] | १. श्रीशुकः[7]<br>२. सूतजातीयो रोमहर्षणश्च[8] । |

१. भागवतम्—१।२।११ ।

२. कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा
तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ।
योगीन्द्राय तदात्मनाथभगवद्राताय कारुण्यत-
स्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥ (श्रीमद्भागवतम्–१२।१३।१९)

३. प्रजापतिः (ब्रह्मा) भगवतो गुणावतारोऽस्ति इति श्रीमद्भागवतस्यैव निम्नाङ्कितेषूद्धरणेषु सिद्धयति, यथा—
(१) आद्योऽवतारः·······चरिष्णुभूम्नः । अहं भवो······। (श्रीमद्भा० २।६।४१–४२$\frac{1}{2}$)
(२) इति विज्ञापितो देवैर्भगवानात्मभूर्नृप । तत्रैव ७।३।१४$\frac{1}{2}$ । (३) ३।८।१३-१५ श्लोकाः ।

४. मायां विविदिषन् विष्णोर्मायेशस्य महामुनिः ।
महाभागवतो राजन् पितरं पर्यतोषयत् ॥ (भागवतम्—२।९।४१)

५. तृतीयमृषिसर्गं च देवर्षित्वमुपेत्य सः ।
तन्त्रसात्वतमाचष्टे नैष्कर्म्यं कर्मणां यतः ॥ (भा० १।३।८)

६. श्रीमद्भागवतम्–२।७।३६, १।४।१४ श्लोकौ । ७. तदेव–१।७।८ ।

८. तदेव–१२।७।५–७ श्लोकाः ।

इमां परम्परां सूत्ररूपेणैवमपि दर्शयितुं शक्यते—
यथा—

(श्रीभागवततत्त्वम्)
भगवान्नारायणः
|
प्रजापतिः
(ब्रह्मा)
|
देवर्षिर्नारदः
|
महर्षिः कृष्णद्वैपायनव्यासः
(श्रीमद्भागवतसंहितारूपेण)
|
श्रीशुकदेवमुनिः | सूतजातीयो रोमहर्षणः

श्रीशुकाद् विष्णुरातेन परीक्षिता श्रुतमिदं संहितावद्धं भगवद्विभूतिसंयुक्तं नानाऽवतार-कथासंवलितं भागवतम्। तत्रैवोग्रश्रवानामकेन रोमहर्षणसुतेन सूतेनापि[1] समधिगतमेतद्, येन खलु पश्चाच्छौनकादिनैमिषारण्यवासिमुनिसत्रे तस्य प्रवचनं कृतम्।

अस्मिन्नेव ग्रन्थे एकाऽन्याऽपि परम्परा प्रच्छन्नरूपेणोपलभ्यते। तद्यथा—पूर्वं नागलोके सनकादिदेवर्षीणां विशेषपृच्छायां भगवता संकर्षणेन कृपया तत्त्वमिदं तेभ्यो दत्तम्[2]। पश्चादेतस्य प्राप्तिक्रम एवंरूपेणोपलभ्यते—

( श्रीमद्भागवतं तत्त्वात्मकम् )
भगवान् संकर्षणः
|
सनत्कुमारः
|
व्रतशीलसांख्यायनमुनिः
|
सांख्यायनशिष्यो मैत्रेयगुरुः पराशरमुनिः ( संहितारूपं विधाय भगवद्विभूति-तत्त्वसहितम्, पुलस्त्यर्षिप्रेरणया ) | देवगुरुर्बृहस्पतिः
| |
मैत्रेय ऋषिः | वृष्णिवंशीय उद्धवः ( तत्त्वरूपेणैव ) स्कन्दपुराणोक्तपरम्परामाश्रित्य[3]
|
विदुरः

---

१. अहं चाध्यगमं तत्र निविष्टस्तदनुग्रहात्।
सोऽहं वः श्रावयिष्यामि यथाऽधीतं यथामति ॥ (भागवतम्–१।३।४५)

२. श्रीमद्भागवतम्–३।८।२, ३।८।७½ श्लोकाः।

३. सांख्यायनप्रसादाप्तं श्रीमद्भागवतं पुरा।
बृहस्पतिर्दत्तवान् मे तेनाहं कृष्णवल्लभः ॥
(स्कन्दपुराणे वैष्णवखण्डे चतुर्थेऽध्याये नवमः श्लोकः)

क्रमेणानेन सुस्पष्टं यत् सर्गस्यादित एवास्य ज्ञानस्य द्वे सरणी युगपद्रूपेणाऽऽस्ताम् । भगवान् संकर्षणो भगवतः श्रीहरेर्वासुदेवादिचतुर्व्यूहेष्वन्यतमो भगवद्रूप एव ख्यातः, अत एव तन्निर्गत-परम्परालब्धज्ञानमपि भागवतमिति कथनं समीचीनमेव ।

प्रायशः ( बहुषु स्थानेषु ) परम्परागतस्य ज्ञानस्यास्य पुराणमिति[1] संज्ञा दृश्यते ।[2] वयं मन्यामहे यदेषा संज्ञाऽस्य प्रजापतिकृतैव विद्यते । यदा प्रजापतिना (ब्रह्मणा) नारदायोप-दिष्टमिदं तत्त्वम्, तदेवास्य पुराणविद्यारूपमपि सङ्घटितम् । अतः पूर्वमुपदेशोऽयं भगवता नारायणेन स्वरहस्यभूतज्ञानमिति कथितः, न 'पुराणम्' इति चतुःश्लोकात्मके भागवते नितरां द्रष्टुं शक्यते, यथा—

ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ।
सरहस्यं तदङ्गं च गृहाण गदितं मया ।।[2] इति ।

सङ्कर्षणपरम्परायामपि सूक्ष्मधियाऽनुशीलनं कृते सति स्फुटं प्रतीयते यत् संकर्षणादारम्य सांख्यायनपर्यन्तमिदं तत्त्वरूपेणैवासीत्, परतः पुराणकारं पराशरमुनिं सम्प्राप्य तदुपबृंहित-रूपेणास्य पुराणसंज्ञा सञ्जातेति तद्वचनेनैव सिद्ध्यति—

प्रोवाच मह्यं स दयालुरुक्तो
मुनिः पुलस्त्येन पुराणमाद्यम् ।।[3]

प्रसङ्गेऽस्मिन् विदुरो मैत्रेयं प्रति वदति, यन्मया यद् भागवतं प्राप्तं तन्नूनमेवासीत् पुराणम्, पुलस्त्यर्षिप्रेरणया मम गुरुणा पराशरेण कृपया मह्यं प्रदत्तमिति ।

ध्यातव्यं भवति यद्वैदिकी पुराणविद्या कल्पस्य कृतादिकेष्वन्येषु युगेषु यथाश्रुतयथारक्षित-परम्परया मौखिक्येव तिष्ठति । जना एतरया गुरुसम्प्रदायानुसारमध्ययनं कुर्वन्ति स्म । परन्तु कलियुगे आगते सति, द्वापरान्तकलियुगारम्भयोः सन्धिकाले विस्तृताम्, किन्तु कर्णपरम्परा-मेवाश्रितां तामेकामेव पुराणसंहिताम् आगामियुगस्य जनानां स्मृतिं ग्रहणक्षमतां चाकलय्य भगवदंशभावितः कश्चिद् व्यासः संक्षिप्तां कृत्वा विभिन्नानामुपासकानामधिकारविधिं च सञ्चिन्त्य

---

२. पुराणशब्देनात्र शाश्वती पुराणविद्येव ग्राह्या, यस्य ऋग्वेदादिवैदिकसाहित्येऽपि समुल्लेखो विद्यते । तद्यथा—'तां गाथया पुराण्या पुनानमभ्यनूनुषत्' (ऋ० ९।९९।४) ।

१. (क) प्रवर्त्तये भागवतं पुराणम् । श्रीमद्भाग०—३।८।२ ।
(ख) स इत्थमापृष्टपुराणकल्पः । श्रीमद्भाग० ३।७।४२ ।
(ग) तस्मा इदं भागवतं पुराणं दशलक्षणम् । ,, २।९।४२ ।
(घ) प्राह भागवतं नाम पुराणं ब्रह्मसम्मितम् । ,, २।१।८ ।
(ङ) इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् । ,, १।३।४० ।
(च) संसारिणां करुणयाह पुराणगुह्यम् । ,, १।२।३ ।

२. श्रीमद्भागवतम्–२।९।३०; ३. तदेव–३।८।२ ।

तत्तद्भगवत्स्वरूपप्रामुख्येनाष्टादशरूपां कृत्वा व्यातनोतीति पुराणवाङ्मयादेव निश्चीयते[1]। विष्णुपुराणे[2] वायुपुराणे[3] चैतादृशानां व्यासानामनुक्रमणिका समुपलभ्यते, यत्र कमलोद्भवः (ब्रह्मा), पराशरः कृष्णद्वैपायनाश्च व्यासरूपेण परिगणिताः सन्ति। देवीभागवतेऽपि[4] व्यासगणनाप्रसङ्गे कृष्णद्वैपायनोऽष्टाविंशतिको व्यासोऽस्तीति सुस्पष्टं विज्ञायते।

अनुमीयते यत् प्रथमपरम्परायामस्य भागवतस्य पुराणाकारस्वरूपं स्वयं परमेष्ठिना प्रजापतिनैव सङ्घटितम्; यतस्तेन नारदोपदेशकाले भगवद्विभूतिसंग्रहरूपेणास्य परिचयः प्रस्तुतः। तथा हि—'संग्रहोऽयं विभूतीनां त्वमेतद्विपुलीकुरु'[5] इति।

भगवद्विभूतिसङ्ग्रहसूचनेनैव तत्त्वात्मकस्वरूपव्यतिरिक्तमस्यावतारगाथासम्मिश्रसूत्रात्मकपुराणरूपं स्पष्टं प्रतीयते। वयं मन्यामहे यदस्यामेवावस्थायामस्य पुराणलक्षणात्मकं कलेवरमपि भगवता प्रजापतिनैव निष्पादितम्, यथा—'तस्मा इदं भागवतं पुराणं दशलक्षणम्'[6] इति।

अस्याः परम्परातो नारदमुखेन श्रीवेदव्यासेन एवमेव भगवद्विभूतिमत्स्वरूपोपबृंहितं भागवतं प्राप्तम्। द्वितीयपरम्पराविषयेऽपीयं गवेषणा यत् पुराणकृत्पराशरं सम्प्राप्येदं पुराणविद्यास्वरूपमगमदिति। पराशरात् प्राक् सर्वेऽस्य व्याख्यातारो निवृत्तिमार्गीया एवासन्। सांख्यायनः पारमहंस्यमुख्योऽपि सन् भगवद्विभूतिवर्णनोपक्रमे बद्धादरोऽभवत्,[7] परन्तु तेन पारमहंस्यधर्मवशात् साकल्येन कार्योऽयं नोपपादितः, अतस्तच्छिष्येण पराशरमुनिनैवास्य पुराणस्वरूपमुपकल्पितमिति।

भगवता कृष्णद्वैपायनेन व्यासेन यथा प्रथमपरम्परात्मकं भागवतपुराणं नारदेनावाप्तम्, तथैव द्वितीयपरम्परागतमपि समाधिना साक्षात्कृतम्। पश्चाद् वर्त्तमानद्वापरस्यापि कृष्णावतारचरितानां समाधिलब्धदर्शनं कृत्वा तत्प्रामुख्येन काव्यरूपसन्निबद्धा सात्वतीसंहिता विनिर्मितेति सर्वं श्रीमद्भागवतानुशीलनादेव सिद्ध्यति।

**श्रीमद्भागवतस्य समष्टिगतस्वरूपं ग्रन्थरूपेणास्य सङ्कलनञ्च**

श्रीमद्भागवतस्य संहितारूपेण निर्मितिकथा विस्तृतरूपेण तत्रैवानुसन्धेया[8], अत्र तु प्रयोजनवशात् तस्यानुवाद एव क्रियते।

'वेदानां विभाजनम्, महाभारतपुराणप्रभृतिग्रन्थानां लेखनं सम्पादनं च विधाय, यदा महर्षिः कृष्णद्वैपायनो निर्वृत्तिं नावाप, तदा देवर्षिणा नारदेन तद्रहस्यमुद्घाटितं यत् सर्वमपि

---

१. द्वापरे द्वापरे विष्णुर्व्यासरूपेण सर्वदा।
वेदमेकं स बहुधा कुरुते हितकाम्यया॥
अल्पायुषोऽल्पबुद्धींश्च विप्रान् ज्ञात्वा कलावथ।
पुराणसंहितां पुण्यां कुरुतेऽसौ युगे युगे॥ (देवीभागवतम्–१।३।१९-२०)

२. ६।८।४२। ३. १०३।५८–६७। ४. १।३।१८–३३। ५. भा० २।७।५१।

६. श्रीमद्भागवतम्–२।९।४३।

७. सांख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः (श्रीमद्भागवतम् ३।८।८)।

८. प्रथमस्कन्धस्य ४।५।६।७।८ इत्यादिकेष्वध्यायेषु।

कृत्वा नेदानीमपि भवता भगवतोऽमलं यशो विस्तारितम्। भारतादिव्यपदेशेन लौकिकानां धर्मार्थकामानामेव वेदोक्तरीत्या व्याख्यानं भवता व्यधायि, न पुनर्वासुदेवस्य महिमोपवर्णितो[1] येन खल्वसौ तुष्येदिति। अतश्चेत् परां निर्वृत्तिमिच्छति भवान्, तर्ह्युरुक्रमस्य भगवतः सर्वमपि लीलालास्यं समाधिद्वारा साक्षात्कृत्वोपवर्णयेति।[2]

पश्चान्नारदस्यादेशमुपदेशं च शिरसा स्वीकृत्य व्यासेन तत्सर्वमपि समाधिबलेन स्मृतम्, यद्भागवतत्त्वभगवल्लीलासम्बन्धिपुरोपक्लृप्तं ज्ञानमासीद् यच्च चरितमभूत्। पुनस्तं सर्वं चैकत्र काव्यकलितभाषया संहितारूपं रचयामास। यथोक्तम्—

भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले।
अपश्यत् पूर्वपुरुषं मायां च तदपाश्रयाम्॥
............विद्वांश्चक्रे भारतसंहिताम्॥[3]

**शुककर्तृकं सात्वतसंहिताऽध्ययनं परीक्षित्सभायां तत्प्रवचनं च**

भगवान् व्यासः संहितामिमां स्वकीयमात्मनिष्ठं निवृत्तिपरायणं सुतं शुकदेवमुनिमध्यापयामास।

अत्रैका शङ्का समुदेति यत् स्वात्मनिष्ठस्य निवृत्तिपरायणस्य शुकदेवमुनेः कथमध्ययनप्रवचनादिलौकिककार्येषु प्रवृत्तिः सञ्जातेति, तदस्याः समाधानमप्यत्रैवंरूपेण सम्प्राप्यते—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः॥
हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणिः।
अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः॥[4]

वैष्णवपरम्परास्वेतद्विषयिणी एका लोकभणितिरपि विद्यते। यतस्तस्याः प्रक्रान्तविषयोद्घाटनेऽन्यतरमहत्त्वमस्ति, अतस्तस्यापि संसूचनमेवात्र दीयते। तद्यथा—'समाधिस्थस्य शुकदेवस्य कर्णकुहरे तस्योद्बोधनाय भगवता व्यासेन स्वकृतसंहितायाः कतिपयश्लोकानां मधुरं गायनं तारस्वरेणाकारि, पश्चात्तन्माधुरीसमाकृष्टचेताः शुकः श्लोकानामाकरग्रन्थं व्यासकृतं श्रीमद्भागवतं स्वयमेव श्रद्धयाऽधीतवानिति। सा श्लोकद्वयी एवमस्ति —

---

१. भवतानुदितप्रायं यशो भगवतोऽमलम्।
येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम्॥
यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः।
न तथा वासुदेवस्य महिमा ह्यनुवर्णितः॥ (श्रीमद्भा० १।५।८-९)

२. अथो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः।
उरुक्रमस्याखिलबन्धमुक्तये समाधिनाऽनुस्मर तद्विचेष्टितम्॥ (श्रीमद्भा०-१।५।१३)

३. तदेव-१।७।४-६।

४. स संहितां भागवतीं कृत्वानुक्रम्य चात्मजम्।
शुकमध्यापयामास निवृत्तिनिरतं मुनिम्॥ (श्रीमद्भा० १।७।८)

१. 'बर्हापीडं नटवरवपुः कर्णयोः कर्णिकाम्'[1] इत्यादि ।

२. 'अहो बकीयं स्तनकालकूटं जिघांसया पाययदप्यसाध्वी'[2] इति ।

एतया किंवदन्त्यैतदपि निश्चीयते यदिदानीन्तने श्रीमद्भागवते सम्प्राप्तेयं श्लोकद्वयी अनेनैव स्वरूपेण व्यासकृतसंहितायामवश्यमेवासीदिति ।

परन्त्वत्रैव पुनरप्येका विप्रपत्तिः समापतति यद् बर्हापीडमित्यादिश्लोको वर्त्तमान-श्रीमद्भागवतस्य दशमस्कन्धे शुकपरीक्षित्संवादे एव प्राप्यते । अत्र त्वध्यायस्यारम्भः किलेत्थम्—

इत्थं शरत्स्वच्छजलं पद्माकरसुगन्धिना ।
न्यविशद् वायुना वातं सगोगोपालकोऽच्युतः ॥

इति शुकोक्त्यैव सम्भवति । बर्हापीडमित्यादिश्लोकोऽयं श्रीकृष्णप्रेममुग्धाभिर्वल्लभीभिः कृतं श्रीकृष्णस्य ध्यानलब्धरूपवर्णनमस्ति, यं श्रीशुकदेवमुनिः स्वयं भावपूरितभाषयाऽभिमन्यु-तनयं श्रावयति ।

परीक्षित्कृतप्रश्नानां शुककृतसमाधाननिबन्धनात्, पारीक्षिच्छङ्कानां व्याससमयेऽभा-वाच्चापि नैवमपि कथयितुं शक्यते यत् शुकेन परीक्षित्सदसि या कथा श्राविता, सा व्यासकृत-संहितायाः कण्ठस्थरूपमेवासीदिति । रासपञ्चाध्याय्यां परीक्षित्कृतया शङ्कया, शुककृतं तस्याः समाधानेनैव[3] प्रतीयते यदत्र शङ्कापनोदनं शुककर्तृकम्, नेतरस्येति ।

अहो बकीयमित्यादिद्वितीयं श्लोकमपि विदुरं प्रत्युद्धवस्य भणितिरूपेण स्वयं शुक एव श्रावयति, अतः कथमस्या लोकोक्त्याः सङ्गतिर्भवति ? कथं वा सिद्ध्यति यद् व्यासकृत-संहितामेवाधीत्य शुकेन तस्याः प्रवचनं कृतमिति ।

तदस्याः समाधानमेवं क्रियते यद् व्यासेन स्वकीयसंहितानां द्वे द्वे संस्करणे निर्मायि । एकं तु मूलं प्रथमं संस्करणम्, यस्मिन् व्यासेन स्वपूर्वपरम्पराणां परिस्थितीनाञ्च समाधिदृष्टा-कलनं व्यधायि, द्वितीयं तच्छिष्यसम्प्रदायानुशीलितं समुपबृंहितं संस्करणम्, यत् खलु कलियुगस्य पारायणार्थं पश्चान्निर्मितमिति ।

प्रायः सम्पूर्णानामपि पुराणानां महाभारतस्यापि चेयमेव स्थितिः सञ्जातेत्यनुमीयते । यतः पुराणेषु महाभारतनिर्माणवर्णनं भारते च पुराणानां स्थितिर्युगपदेव संसूच्यते । दिङ्मात्रो-दाह्रियतेऽस्माभिरत्र,

१. पुराणेषु भारतनिर्माणवर्णनम्, यथा स्कान्दे—

अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदूपबृंहितम् ॥

'मात्स्ये' च—

अष्टादश पुराणानि......................।
ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम् ॥

---

१. तदेव–१०।२१।५; २. तदेव–३।२।२३ ।
३. श्रीमद्भागवतम्–१०।३३।२७–२८ ।

२. पुराणेष्वेव पुराणानां भारतपरवर्तित्वम्। यथा—'भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः'[1] इति।

कारणनिर्देशपूर्वकं[2] भारतनिर्माणसूचनं दत्वा पश्चाच्छ्रीमद्भागवतनिर्माणकथोपन्यस्ता। कार्त्स्न्येनाधिगन्तुं श्रीमद्भागवतस्य तत्तत्प्रसङ्गा उन्नेया विपश्चिद्भिरिति।

श्रीमद्भागवतस्य कुशलव्याख्यातारः स्वामिपादा अखण्डानन्दसरस्वतीमहाशया अत्र कथयन्ति यद् वर्त्तमानाष्टादशपर्वात्मकमहाभारतस्य प्राग्व्यासेन शतपर्वात्मकं महाभारतं निर्मितम्, पश्चाद् दुर्बोधतया च तेन तस्य संक्षेपार्थं स्वीयौ द्वौ शिष्यौ जैमिनि-वैशम्पायनौ समादिष्टौ। जैमिनिकृतस्य संक्षिप्तमहाभारतस्येदानीं केवलं जैमिनीयाश्वमेधपर्व एवोपलभ्यते। सम्प्रति तु वैशम्पायनकृतसंक्षिप्तमहाभारतमेव सम्प्राप्यते, यस्य खलु सूतपुत्रेण रोमहर्षणिना नैमिषारण्ये व्याख्यानं कृतम्[3]। पश्चाद् भूमिकारूपेणायमपि प्रसङ्गोऽत्र संयुक्तः, यं खलु व्यासेनैव काव्यरूपं विधायाष्टादशपर्वात्मके संक्षिप्तेऽन्तिमे संस्करणे सन्निविष्टमिति। तथा च—

एतत्पर्वशतं पूर्णं व्यासेनोक्तं महात्मना।
ततस्तु सूतपुत्रेण रोमहर्षणिना पुरा॥
कथितं नैमिषारण्ये पर्वाण्यष्टादशैव तु।[4]

वर्त्तमानं महाभारतं स्वयं भारतकार एव, 'समासो भारतस्यायम्' इति कथयति। स्वामिचरणानामभिमतं यत् पुराणानि (श्रीमद्भागवतसहितानि) एतस्य शतपर्वात्मकस्य महाभारतस्य परवर्त्तिनः, न तु वैशम्पायनकृतसंक्षिप्तमहाभारतस्येति[5]। वर्त्तमानाष्टादशपर्वात्मके महाभारते जनमेजयस्य नागयज्ञादीनां प्रसङ्गानां वर्णनं विद्यते। जनमेजयस्य श्रीमद्भागवतस्य मुख्यश्रोतुः परीक्षितः पुत्रत्वात् कथं श्रीमद्भागवतं भारतपरवर्तिग्रन्थमिति तदुक्तिः संगच्छेत, यद्येवं न स्वीक्रियेत।

अतो वयं तर्कयामो यद् भारतवत् श्रीमद्भागवतस्यापि द्वे संहिते सञ्जाते। व्यासेन श्रीमद्भागवतस्य या प्रथमा 'सात्वतीति' नाम्नी संहिता रचिता, साऽवश्यमेव पद्यबद्धरूपेण भवितव्या। तस्यामेव प्रसङ्गानुसारेण पूर्वोक्तपद्यद्वयी, अन्याश्च भगवल्लीलावर्णयितारः श्लोकाः साम्प्रतिकदशायामेवासन्। एतस्यामाद्यसंहितायां मूलनारायणीयं ज्ञानं विदुरोद्धवसंवादात्मक-साङ्कर्षणपरम्परायास्तत्त्वं नारदब्रह्मनारदयुधिष्ठिरादिसंवादानि याथातथ्येन संवर्णितान्यपि प्रमुखता वर्त्तमानद्वापरयुगस्थावतारकथानामेवासीदिति।

---

१. श्रीमद्भागवतम्—१।४।२९।
२. द्रष्टव्याः—प्रथमस्कन्ध—चतुर्थाध्यायस्य, २४-२५-२९ श्लोकाः।
३. 'भागवतरहस्य' नामके हिन्दीप्रवचनग्रन्थे पृ० ४६ (१९७१ संस्करणम्)।
४. महाभारतम्—आरण्यकपर्वणि—२।८४।
५. वैशम्पायनेन केवलं व्यासकृतभारतस्य संक्षेपणमेव कृतम्। जनमेजयप्रश्नोत्तररूपेणोपबृंहितं तथा च सूतशौनकसंवादसंवर्धितं वस्तुजातं पुनः श्रीव्यासेनैव समाधिनाऽनुस्मृत्य काव्यरूपेणोपनिबद्धम्। अतो महाभारतकर्तृत्वं व्यासस्यैवास्ति, नेतरस्य।

श्रीशुकेनास्य सर्वस्यापि प्रासङ्गिकरूपेणाध्ययनं कुर्वताऽपि प्रधानतया श्रीव्रजेन्द्रनन्दनस्य भुवनमोहिनीलीलानुशीलन एव स्वमनो निवेशितः। व्यासकृतसंहितायास्तद्विषयकाणि मधुरभाव-पेशलपद्यानीव तस्य नित्यगेयानि सञ्जातानि, अत एव परीक्षित्सदसि कृते प्रवचने व्यासकृत-श्लोकानामुच्चारणे न काचिद् विप्रपत्तिरिति सिद्धयति।

**श्रीमद्भागवतस्य मूलसंहिताया विषयस्वरूपम्**

१. महर्षिकृष्णद्वैपायनकृतायामाद्यसंहितायां वर्त्तमानश्रीमद्भागवतस्य तृतीयस्कन्धाद् यावदेकादशस्कन्धपर्यन्तं वर्णनं प्राय एवमेव रूपेण भाषाशैल्यां चावश्यमासीत्।

२. श्रीशुकेन पितृप्राप्तसंहितां परीक्षित्सदसि श्रावयता तत्प्रश्नान् चोत्तरयता मूल-संहिताया विषयस्य श्लोकानामेव प्राधान्यमुपकल्पितम्[1]।

३. अस्यामाद्यसंहितायां पुराणानां पञ्च लक्षणानि सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरित-प्रभृतीनि, भागवतस्य च सर्गविसर्गस्थानपोषणमन्वन्तरेशानुकथानिरोधमुक्तिराश्रयादीनि दश लक्षणानि येन केन प्रकारेणावश्यमेवासन्, यतः स्वयं शुकेनैव स्वीकृतं यत् तस्याध्ययनविषयः पितृप्रदत्तभागवतपुराणमेवासीदिति।

इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्।
अधीतवान् द्वापरादौ पितुर्द्वैपायनादहम्[2]॥

४. भागवतस्य द्वितीये समुपबृंहिते संस्करणे—परीक्षिज्जन्म, भीष्मकृता भगवत्स्तुति-परीक्षिद्दिग्विजयशापलब्धिशुकसम्मेलनादिप्रसङ्गाः सूतेन स्वकथायाः प्रास्ताविकरूपेणोपवर्णिताः।

५. शुकेन या कथा परीक्षित्सभायां श्राविता, तस्यां वर्त्तमानद्वितीयस्कन्धस्य चतुर्था-ध्यायाद, द्वादशस्कन्धस्य पञ्चमाध्यायपर्यन्तविस्तृतविषयोऽवश्यमेवासीत्। सूतेन स्वकृतव्या-ख्याने शुकस्यापि शब्दावली सन्निविष्टा, यतस्तेन परीक्षित्सदसि शुकमुखादेवास्याः कथाया अध्ययनं कृतम्[3]।

एतेन यत्र शुकप्रोक्तभागवतस्य स्वरूपं स्पष्टतामायाति, तत्रैव द्वितीयोऽयं प्रश्नोऽपि सुतरां जागर्ति यद् वर्त्तमानं शौनकसूतसंवादात्मकं संस्करणम्, यस्मिन् खलु द्वादशाः स्कन्धाः, अष्टादशसहस्रश्लोकाश्च विशेषज्ञैः स्वीक्रियन्ते, कस्य कवेः रचनाऽस्ति?

**वर्त्तमानद्वादशस्कन्धात्मकस्य स्वरूपविवेचनम्**

श्रीमद्भागवतविषयिणी प्राप्तपरम्परा इमं चिराद् द्वादशस्कन्धात्मकमेवाङ्गी-करोति। श्रीमन्नारदीयपुराणे चास्य द्वादशस्कन्धात्मिका कथानुक्रमणी एवंरूपेणोपलभ्यते[4]। तद्यथा—

---

१. द्रष्टव्यम्—परीक्षित्प्रश्नसमुत्तरणे शुककृतमूलसंहिताया मैत्रेयविदुरसंवादस्य समुद्धरणम्-(श्रीमद्भा० ३।१।१)।
२. श्रीमद्भागवतम्—२।१।८; ३. तदेव—१।३।४५।
४. नारदपुराणम्—अध्यायः—९६।

तत्र तु प्रथमे स्कन्धे सूतर्षीणां समागमः ।
व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च ॥
पारीक्षितमुपाख्यानमितीदं समुदाहृतम् ।
परीक्षिच्छुकसंवादे सृतिद्वयनिरूपणम् ॥
ब्रह्मनारदसंवादेऽवतारचरितामृतम् ।
पुराणलक्षणं चैव सृष्टिकारणसम्भवः ॥

द्वितीयोऽयं समुदितः स्कन्धो व्यासेन धीमता ।
चरितं विदुरस्याथ मैत्रेयेणास्य सङ्गमः ॥
सृष्टिप्रकरणं पश्चाद् ब्रह्मणः परमात्मनः ।
कापिलं सांख्यमप्यत्र तृतीयोऽयमुदाहृतः ॥
सत्याश्चरितमादौ तु ध्रुवस्य चरितं तथा ।
पृथोः पुण्यतमाख्यानं ततः प्राचीनबर्हिषः ॥

इत्येष तुर्यो गदितो विसर्गस्कन्ध उत्तमः ।
प्रियव्रतस्य चरितं तद्वंश्यानां च पुण्यदम् ॥
ब्रह्माण्डान्तर्गतानां च लोकानां वर्णनं ततः ।
नरकस्थितिरित्येष संस्थाने पञ्चमो मतः ॥
अजामिलस्य चरितं दक्षसृष्टिनिरूपणम् ।
वृत्राख्यानं ततः पश्चान्मरुतां जन्मपुण्यदम् ॥

षष्ठोऽयमुदितः स्कन्धो व्यासेन परिपोषणे ।
प्रह्लादचरितं पुण्यं वर्णाश्रमनिरूपणम् ॥
सप्तमो गदितो वत्स वासनाकर्मकीर्त्तने ।
गजेन्द्रमोक्षणाख्यानं मन्वन्तरनिरूपणम् ॥
समुद्रमन्थनं चैव बलिवैभवबन्धनम् ।
मत्स्यावतारचरितमष्टमोऽयं प्रकीर्तितः ॥
सूर्यवंशसमाख्यानं सोमवंशनिरूपणम् ।
वंशानुचरिते प्रोक्तो नवमोऽयं महामते ॥

कृष्णस्य बालचरितं कौमारं च व्रजस्थितिः ।
कैशोरं मथुरास्थानं यौवनं द्वारकास्थितिः ॥
भूभारहरणं चात्र निरोधे दशमः स्मृतः ।
नारदेन तु संवादो वसुदेवस्य कीर्तितः ॥
यदोश्च दत्तात्रेयेण श्रीकृष्णस्योद्धवस्य च ।
यादवानां मिथोऽन्तश्च मुक्तावेकादशः स्मृतः ॥
भविष्यत्कालनिर्देशो मोक्षो राज्ञः परीक्षितः ।
वेदशाखाप्रणयनं मार्कण्डेयतपः स्मृतम् ॥

सौरीविभूतिरुदिता सात्वती च ततः परम् ।
पुराणसंख्याकथनमाश्रये द्वादशे स्मृतः ॥
इत्येवं कथितं वत्स श्रीमद्भागवतं तव ॥

प्रमाणेनानेन द्वादशस्कन्धात्मकं श्रीमद्भागवतं व्यासकृतमेव द्वितीयं सुसम्पादितं संस्करणम् ।

तदेतेन निश्चप्रचरूपेण कथयितुं शक्यते यदयं ग्रन्थो महर्षिव्यासस्यैव कृतिरस्ति, नेतरस्य कस्यचिदर्वाचीनकवेरिति, यथा साम्प्रतिकसमालोचकाः मन्यन्ते ।

पुनरन्ते वयं पुराणस्यास्य प्रत्नतमटीकाकृच्छ्रीश्रीधरस्वामिवचनानुद्धृत्य प्रबन्धमिममुपसंहरामः, यथा—

श्रीमद्भागवताभिधः सुरतरुस्ताराङ्कुरः सज्जनिः
स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः ।
द्वात्रिंशत्त्रिशतस्य यस्य विलसच्छाखाः सहस्राण्यलं
पर्णान्यष्टदशेष्टदोऽतिसुलभो वर्वर्ति सर्वोपरि ॥

• • •

# दण्डिनः काव्यादर्शः

के० लक्ष्मणशास्त्री

सम्मानितप्राध्यापकः—सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

( ५–९–२२।९७ आदर्शनगरम्, हैदराबाद, आन्ध्रप्रदेशः ५०००४८३ )

काव्येऽलङ्कारस्य प्रयोजनं त्वनुपस्थितायाः काव्यशोभायाः कल्पनमुपस्थितायाश्च संवर्धनमिति प्रायोऽङ्गीकृतस्सिद्धान्तः। अलङ्कारस्साहित्ये शब्दार्थशोभामादधातीति च निश्चप्रचमेव। मानवानामङ्गादिषु भूषणानीत्र साहित्ये काव्यात्मभूतस्य रसादेरुपस्कारको भवत्यलङ्कार इति—

शब्दार्थयोरस्थिरा ये धर्माश्शोभाऽतिशायिनः।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥

आलङ्कारिकाणां मतम्।

अत एव 'सौन्दर्यमलङ्कारः'[1] इति वामनाचार्येणोक्तम्। दोषान् परिहृत्य गुणान् स्वीकृतवतो रचयितुः स्वकाव्येऽलङ्काराणामपि ग्रथनं रचनाया अत्यन्तं शोभाऽऽधायकं भवति, तत्काव्यं सुन्दरश्चानुरस्यते।

काव्यशोभाऽऽधायकानामलङ्काराणामाविर्भावः कदाप्रभृति समारब्ध इत्यनुयोगस्योत्तरं तु मानवसम्भाषणप्रारम्भकालादेवालङ्काराणां सम्भव इति वचनं समुचितं भवति। विश्वसाहित्येऽतिप्राचीनं वैदिकसाहित्यमिति विश्वविद्वांसो विश्वसन्त्येव। वेदेषूपमा-दृष्टान्त-रूपकाद्यलङ्कारा बहुत्र बहुलतरं दृश्यन्ते, यथा उपमायाः—

"सनः पितवे सूनवे अग्ने सूपायनो भव।" (ऋ० १–१–९)

"सूर्यो देवीम् उषसं रोचमानां मर्यो न योषामभ्येति पश्चात्॥" (ऋ० १–११५–२)

इति दृष्टान्ततया वक्तुं शक्यते। एवमेव बहुला अलङ्कारास्तत्र तत्र वेदेषु दृश्यन्त एव।

अग्निपुराणेऽपि शब्दार्थालङ्काराणां विवरणं दृश्यते। अलङ्कारशून्याकृतिस्तु विधवेव दर्शनीया न भवति—

अलङ्करणमर्थानामलङ्कार इतीष्यते।
तं विना शब्दसौन्दर्यमपि नास्ति मनोहरम्।
अर्थालङ्काररहिता विधवेव सरस्वती।

इत्यादि दृश्यते।

उपमालङ्कारस्य निर्वचमग्निपुराणेऽतिमनोहरं कृतम्, यथा—

उपमा नाम सा यस्यामुपमानोपमेयता।
सत्ता चान्तरसामान्ययोगित्वे च विवक्षिता॥
किञ्चिदादाय सारूप्यं लोकयात्रा प्रवर्तते। इति।

एवं स्थिते सम्यग्जिज्ञासाशास्त्रत्वेन, काव्यशास्त्रो विशिष्टशाखात्वेन चालङ्कारस्याव-तरणं भामहाचार्यदिवेत्यनुसन्धातॄणां निर्णयः। अस्यामाचार्यपरम्परायां दण्डी द्वितीयं स्थानमलङ्करोति।

महाकविर्महालङ्कारिकश्च दण्डी विशिष्टतयाऽलङ्कारसम्प्रदायस्य प्रवर्तक आसीत्। तदनन्तरं रीति-वक्रोक्ति-ध्वनि-औचित्यसम्प्रदायानां प्रस्थानानि प्रावर्तन्त।

अलङ्कारसम्प्रदायप्रवर्तकानां मते 'काव्यात्मा रसः' इत्यस्मिन्नर्थे न कापि विप्रतिपत्तिरस्ति।

दण्डिना प्रवर्तितादलङ्कारसम्प्रदायज्ञानात्, अलङ्कारप्रस्थानज्ञानाच्च पूर्वं दण्डिनमधिकृत्य किञ्चिज्जानीमः।

गद्यकविललामभूतः 'कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः' इत्याभाणकस्य लक्ष्यभूतश्चायं दण्डी कीदृश इति तन्निर्मितात् 'अवन्तिसुन्दरीकथा' पीठिकातः किञ्चिद् ज्ञायते।

दण्डिनः प्रपितामहो दामोदरापरनामा भारविरासीत्। भारवेः सुतो 'मनोरथ' नामा बभूव। मनोरथस्य चत्वारः पुत्रा अभवन्। तेषु कनिष्ठः 'वीरदत्तः'। तस्यैव सुतो दण्डी इति ज्ञायते। दण्डिनो माता 'गौरीदेवी'। इयमपि विदुष्येव।

निरन्तरमाषाढदण्डधारी स विद्वान् 'दण्डी' इति प्रख्यातं नाम प्राप्तवानिति लोके प्रथास्ति। अयं नैष्ठिकब्रह्मचारी आसीत्। दण्डी काञ्चीपुरे निवसति स्म।

दण्डिनं तत्कविताश्चाधिकृत्य नैका दन्तकथाः श्रूयन्ते। 'दण्डि-कालिदासयोर्न समकालिकत्वम्, दन्तकथानुसारं प्रचारं प्रापितेषु आभाणकेषु विश्वासो न कर्तव्यः, तान्याभाणकान्यसत्यानि' इत्यधुना लब्धेभ्यो ग्रन्थेभ्यो ज्ञायते।

परन्तु दण्डी कदा आसीदिति तस्य काल इदमित्थन्तया न केनापि निर्णीतम्।

भारविकवेः प्रपौत्रत्वात् कालिदासवाक्यानाञ्चानेनोद्धृतत्वात्, ख्रिस्ताब्दीयतृतीय-चतुर्थशतकाभ्यां परवर्तिनः प्रथमालङ्कारिकस्य भामहस्य प्रस्तावोऽनेन कृतत्वाच्च, दण्डी ख्रिस्ताब्दीयषष्ठशताब्दीयस्स्यादिति साहित्येतिहासकारा मन्यन्ते।

दण्डिरचनास्तिस्र एवाधुना लभ्यन्ते। यथा चोक्तं राजशेखरेण शार्ङ्गधरपद्धतौ —

त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः॥ इति।

ते हि त्रयो ग्रन्थाः—(१) दशकुमारचरितम्, (२) काव्यादर्शः, (३) छन्दोविचितिरिति,

परन्त्वर्धशताब्द्याः पूर्वम् 'अवन्तिसुन्दरीकथा' इति दण्डिनो अन्यद् गद्यकाव्यं प्रातस्स्मरणीयैः, आंगल-संस्कृत-आन्ध्र-द्राविडादिभाषासु निष्णातैः, भरतनाट्यशास्त्रव्याख्यान-'नाट्यकला'सम्पादकैः स्व० श्रीमानवल्लि-रामकृष्णकविमहोदयैर्लब्धम्। तदिदानीमुपलभ्यते। अनेनानुमातुं शक्यते यद् दण्डिविरचिता अन्येऽपि ग्रन्थास्स्युरिति। वयमधुना दण्डिनोऽलङ्कारशास्त्रग्रन्थं 'काव्यादर्श'नामकमधिकृत्यैव विमृशामः।

काञ्चीपुराधीश्वरस्य राजवर्मणः पुत्रस्य साहित्यशास्त्रं परिचाययितुं दण्डीमं काव्यादर्शं लिखितवानिति लोके प्रथाऽस्ति । यं कमपि वोद्दिश्य लिख्यतामयं ग्रन्थः, परमयं दाक्षिणात्य-संस्कृतसाहित्येऽलङ्कारप्रस्थानस्यालङ्कारशास्त्रोदयस्याप्याकर इति निश्चीयते ।

काव्यादर्शमनुसृत्यैव राष्ट्रकूटपतिः 'नृपतुङ्गः' कन्नडभाषायाम् 'कविराजमार्ग' इति तेलुगुभाषायां विन्नकोट-पेद्दनकविश्च 'काव्यालङ्कारचूडामणिः' इत्यलङ्कारशास्त्रग्रन्थावलिखताम् ।

सिंहलराजः 'सेन्'नामा 'स्वभाषालङ्कार' इति ग्रन्थं सिंहलभाषायां खिस्ताब्दीये नवमशतके व्यरचयदिति डाक्टर 'बार्नेट्' इति पाश्चात्यविद्वानकथयत् । तमिलभाषायामपि 'दण्डि अलङ्कारम्' इति ग्रन्थः काव्यादर्शमनुसृत्यैव लिखितः ।

अलङ्कारप्रस्थानप्रवर्तकेषु प्रथमो भामहाचार्य इत्युक्तचरम् । द्वितीयस्तु दण्डी । रस-सिद्धान्तस्य प्राधान्यं तु भरतानन्तरकालिका विद्वांसो नैके श्रव्यकाव्ये नाङ्गीकृतवन्तः । यद्यपि केचनालङ्कारिका दृश्यकाव्ये रसमुररीचक्रुर्मातृगुप्तादयः, तथापि तेषां कृतीनामनुपलम्भात्तदि-दन्तयाऽद्य वक्तुं न शक्यते ।

भामहस्तु रससिद्धान्तस्य विरोध्येव । अलङ्कारा एव केवलं काव्यात्मभूता इति भामह-मतम् । दृश्येतरकाव्येषु भामहेन रसस्य स्वारस्यं नोररीकृतम् । रसवदाद्यलङ्कारेष्वेव रसभावा-दीनामन्तर्भावं स मेने ।

दण्डी तु, अस्मिन्नंशे भामहमेवानुससार । परन्तु स काव्ये मूर्धन्यं स्थानमलङ्कारापेक्षया गुणेभ्यो ददाति । रीतिरेव गुणान् प्रकाशयतीति दण्डी रीतेरेव काव्यात्मत्वं वदति । भामह इव दण्डी रसविषये प्रातिकूल्यं न भजते । दण्डी रसा अष्टावेवेति काव्यादर्शे द्वितीयपरिच्छेदे एवं वदति—

प्राक् प्रीतिर्दर्शिता सेयं रतिः शृङ्गारतां गता ।
रूपबाहुल्ययोगेन तदिदं रसवद्वचः ॥
इत्यारुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः ।
भीमस्य पश्य शत्रुत्वमित्येतद्रसवद्वचः ॥
इत्युत्साहः प्रकृष्टात्मा तिष्ठन् वीररसात्मना ।
रसवत्त्वं गिरामासां समर्थयितुमीश्वरः ॥
इति कारुण्यमुद्रिक्तमलङ्कारतया स्मृतम् ।
तथापरेऽपि बीभत्सहास्याद्भुतभयानकाः ॥
वाक्यस्याग्राम्यतायोनिर्माधुर्यें दर्शितो रसः ।
इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम् ॥

अनेन ज्ञायते यद्दण्डी भामह इव नितरां रसविरोधी नास्तीति । वामनस्तु 'रीतिरात्मा काव्यस्य' इति सुस्पष्टमेव रीतिं काव्यात्मसिंहासनेऽभिषिषेच ।

काव्यादर्शे त्रयः परिच्छेदास्सन्ति । प्रथमे परिच्छेदे शब्दस्य काव्यस्य च माहात्म्यम्, दोषाणां निन्दा, शास्त्रस्य प्रयोजनम्, काव्यनिर्वचनम्, काव्यशरीरम्, काव्यवैविध्यम्, भाषा-

भेदानुसारं काव्यभेदाः, वैदर्भी-गौडीमार्गौ, वैदर्भ्याः प्राणभूता दश गुणाः, सहजप्रतिभाया आवश्यकतेत्यादयो वर्णिताः ।

द्वितीये तु परिच्छेदेऽलङ्कारलक्षणम्, अलङ्कारस्योद्देशः, 'स्वभावोक्ति-उपमा-रूपक-दीपक-आवृत्ति-आक्षेप-अर्थान्तरन्यास–व्यतिरेक–विभावना–समासोक्ति-अतिशयोक्ति–उत्प्रेक्षा-हेतु-सूक्ष्म-लेश-यथासंख्य-रसवत्-ऊर्जस्वि–पर्यायोक्ति-समाहित-उदात्त-अपह्नुति-श्लेष-विशेषोक्ति-तुल्ययोगिता-विरोध-अप्रस्तुतप्रशंसा-व्याजस्तुति - निदर्शन-सहोक्ति-परिवृत्ति-आशीस् - संसृष्टि-भाविकाः, चतुस्त्रिंशदर्थालङ्कारास्तेषां भेदाश्च दण्डिना स्पष्टीकृताः ।

तृतीयपरिच्छेदे यमकम्, बन्धभेदाः, स्वर-स्थान-वर्णनियमाः, प्रहेलिकाभेदाः, अपार्थ-व्यर्थ-एकार्थ-संशय-अपक्रम-शब्दहीन-यतिभङ्ग-वृत्तभङ्ग-विसन्धि-देश-काल-कला-लोक-हेतु-विद्या-आगम-विरोधा दोषा वर्णिताः ।

वाचां प्रयोगविषये तु न केवलं कविना, अपि तु सर्वैरपि जागरूकैर्भाव्यमिति दण्डी वदति । "सर्वेषामपि लोकयात्रा वाक्प्रसारादेव । सर्गादितो यदि शब्दज्योतिर्नादीपिष्यत तर्हि भुवनत्रयमिदमन्धन्तमोव्याप्तमभविष्यत्" इति दण्डी शब्दज्योतिः प्रस्तौति । वाक्-गौश्च तुल्ये इति वदति । यदि मेधावी गाम् ( वाचं धेनुम् ) सम्यग्विनियुङ्क्ते, स सकलार्थान् दुह्यति । यदि गो-विनियोगे प्रमाद्यति, तत्प्रयोक्तैव गौः ( पशुः ) भवति । समीचीना वाग् लोके सार्वकालं स्मर्यते । अतः कविः काव्येऽल्पमपि दोषं नोपेक्षेत । अतिसुन्दरमपि शरीमेकेनैव स्वित्रेण दुर्भगं भवति खलु । शास्त्रानभिज्ञः कथं गुणदोषान् विवेकेन जानीयात् ? जात्यन्धः कथं रूपभेदान् जानीते ? अतः भाषा सम्यग् विज्ञाय प्रयुञ्जीत, दोषान् सर्वथा परिहरेदिति दण्डी कवीनुद्बोधयति । यथा—

इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा ।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥
इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥
गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुस्सैव शंसति ॥

दण्डी काव्यस्वरूपं काव्यशरीरमेवं निर्वक्ति--'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली' इति । अस्य लक्षणस्य व्याख्यातारः 'सरसमनोहरतया वर्णयितुमभिलषिता येऽर्थाः कविप्रतिभोल्लासविषयीभूताः सुन्दराः, तैरवच्छिन्ना परिपूर्णा' इति व्याचख्युः ।

दण्डी शब्दार्थौ काव्यशरीरमित्युवाच । अलङ्काराणां तु प्रकारान्तरेण काव्यजीवातुत्वं प्रत्यपादयदिति वक्तुं शक्यते । अलङ्काराणामेव प्राधान्यं दण्डी वदतीति—"काव्यशोभाकरान् धर्मान् अलङ्कारान् प्रचक्षते" इति काव्यादर्शे द्वितीयपरिच्छेदे प्रारम्भ एव उक्तत्वात्, शोभा यद्यपि प्राणा न भवति, तथापि तस्याः प्राधान्यमस्त्येवेत्यंशः सत्यतयोक्तो भवति । 'काव्यात्मभूतो रसः' इति भरतसिद्धान्तस्य दण्डिमतमविरुद्धम् ।

सर्वप्रथमं महाकाव्यलक्षणं दण्डिनैवोक्तम् । दण्डी स्वपूर्ववर्तीनि रामायण-कालिदास-काव्यानि, स्वपितामहभारविकृतकिरातार्जुनीयञ्चेत्यादिकाव्यानि सम्यक् पर्यशीलयत् । दण्डिनः

पूर्वं न केनाप्यालङ्कारिकेण सर्गबन्धरूपः शब्दविस्तर उक्तः। सर्गबन्धो नाम महाकाव्यम्। 'तस्य लक्षणं वच्मि' इति वक्ति।

सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्।
आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्॥
इतिहासकथोद्भूतमितरद्वा सदाश्रयम्।
चतुर्वर्गफलायत्तं चतुरोदात्तनायकम्॥
नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम्।
उद्यानसलिलक्रीडामधुपानरतोत्सवैः॥
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः।
मन्त्रद्यूतप्रयाणाऽधिनायकाभ्युदयैरपि॥
अलङ्कृतमसङ्क्षिप्तं रसभावनिरन्तरम्।
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैस्सुसन्धिभिः॥
सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम्।

इत्येतैरष्टादशवर्णनैः सुन्दरालङ्कारैश्शोभितं काव्यं कल्पान्तस्थायि भवतीति दण्डिनोक्तम्।

अपादपदसङ्घातं गद्यमिति, तद् आख्यायिका कथेति द्विविधमिति, गद्य-पद्यमयी चम्पूरिति च दण्डी भिन्न-भिन्न-काव्यानि निरवर्णयत्। चम्पूलक्षणमुक्तवता दण्डिना नाटकलक्षणान्यनुक्त्वा तेषामन्यत्र विस्तर इति—'मिश्राणि नाटकादीनि तेषामन्यत्र विस्तरः' इति काव्यलक्षणानां समाप्तिः कृता।

कथनरीतयो बहुविधास्सन्ति, तासु भेदस्सूक्ष्म एवास्ति, वैदर्भी-गौणीमार्गयोर्भेदस्तु स्फुटं गोचरीभवति, अतस्ते द्वे रीती अधिकृत्य विवृणोमि इत्युदीर्य दण्डी वैदर्भ्याः प्राणभूतान् दश गुणान् वक्ति—

श्लेषः प्रसादस्समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वं ओजःकान्तिसमाधयः॥ इति।

गौडीमार्गगुणास्त्वेषां विपरीता इति तेषां न्यूनत्वमुक्तं दण्डिना, यथा—

श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम्। इति।

परन्तु, द्वावेवेमौ मार्गाविति न मन्तव्यम्। 'अवन्तिकी लाटीया मागधी' इत्यादयोऽपि प्रत्येकं भिन्न-भिन्नकविमार्गा मनोहरास्स्युरित्युक्ताः, तस्योदाहरणतया इक्षु-क्षीर-गुडादीनां भिन्न-भिन्न माधुर्याणां भेदो यथा वक्तुं शक्यम्, तथैव विविधकवितारीतीनां माधुर्यभेदो विविच्य प्रदर्शयितुं न शक्यत इति वक्ति दण्डी।

काव्यसम्पत्सम्पादनाय कवेर्नैसर्गिकी प्रतिभा-शास्त्रीया निरन्तरोऽभ्यासश्चावश्यकाः। तदर्थं निरन्तरं कविना प्रयतनीयमिति—

नैसर्गिकी च प्रतिभा श्रुतञ्च बहुनिर्मलम्।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः॥

वदति दण्डी।

दण्डी अलङ्कारप्रस्थानस्य प्रवर्तकः। अत एव अलङ्कारान् सूक्ष्मातिसूक्ष्मं विवृणोति। उपमा त्वेकैवैकत्रिंशद्भेदोक्ता दण्डिना।

अस्य प्रपितामहो भारविः किरातार्जुनीये चित्रकाव्यानि सोदाहरणमुक्त्वा स्वीयं पाण्डित्यं प्राचीकटत्। दण्डिनापि तमनुसृत्यैव काव्यादर्शस्य तृतीयपरिच्छेदे यमकादीश्चित्रकविता लक्ष्य-लक्षणैर्व्यवृणोत्। काव्येऽल्पोऽपि दोषो नोपेक्षणीय इति वदन् दण्डी कविभिः काव्येषु दश दोषाः सुतरां नोपेक्षणीया इति तान् दश दोषानुवाच। पूर्वोक्तदशदोषेषु यतिभ्रष्टं भिन्नवृत्तमिति दोषद्वयं विनान्ये दोषास्साम्प्रतिकैरपि कविभिर्नोपेक्षणीया इति तेषां किञ्चिदिव विवरणं क्रियते–

वाक्ये कर्तृ-कर्म-क्रियाणां सत्त्वेऽपि वाक्यस्य समुदायार्थस्याबोधोऽपार्थमिति दोषः। ईदृशानि वाक्यानि उन्मत्ता बालाश्च यदि वदेयुः, तदा दोषो न स्यात्। अन्ये यदि प्रयुञ्जेरन् तदोन्मत्तभाषितं भवति। वाक्ये सन्दर्भे वा पूर्वापरविरोधो व्यर्थमिति दोषः। विना विशिष्ट-प्रयोजनं शब्दस्यार्थस्य वा पुनरुक्तिः 'एकार्थम्' इत्युच्यते, यथा—

**अम्भोधरास्तडिद्वन्तो गम्भीराः स्तनयित्नवः। इति।**

अत्र सर्वेऽपि मेघवाचकाः शब्दा एकार्थकाः।

कविसमयसिद्धा अपि देश-कालविरुद्धा दोषा आधुनिकैर्ज्ञातव्या एवेति दण्डी वदति। अन्ते दण्डी शब्दार्थालङ्काराणां प्राधान्यं पुनर्वक्ति—

**व्युत्पन्नबुद्धिरमुना विधिदर्शितेन मार्गेण दोषगुणयोर्वशवर्तिनीभिः।**
**वाग्भिः कृताभिसरणो मदिरेक्षणाभिर्धन्यो युवेव रमते लभते च कीर्तिम्॥**

आधुनिकाः कवयोऽस्योपदेशस्य मननं कुर्युः।



# काव्यशास्त्री कालिदासः

डॉ० वनेश्वरपाठकः, एम्० ए०, डी० लिट्
संस्कृतविभागाध्यक्षः
सेंट जेवियर्स कॉलेज, रांची (विहार)

'काव्यशास्त्री कालिदासः' इति विषयमधिकृत्य स्वभावत इयं जिज्ञासा समुत्पद्यते यत् कालिदासः कस्यचन काव्यशास्त्रीयग्रन्थस्य निर्माता आसीत् ? किन्तु वस्तुस्थितिरितो भिन्ना। कालिदासविरचितः कश्चन लक्षणग्रन्थो नाद्यावध्यधिगतः, न चापि प्रामाणिकत्वेन विद्वद्भिरङ्गीकृतश्च।

यद्यपि कालिदासकृतत्वेनैकोनचत्वारिंशद् ग्रन्थाः साहित्यजगति दृक्पथमायान्ति[1]; येषु 'काव्यनाटकालङ्कारः', 'श्रुतबोधः' इति ग्रन्थद्वयं क्रमशोऽलङ्कारशास्त्रीयं छन्दःशास्त्रीयञ्च परिगणितमास्ते; किन्तु कालिदासेन ऋतुसंहार-मेघदूत-कुमारसम्भव-रघुवंश-मालविकाग्निमित्र-विक्रमोर्वशीयाभिज्ञानशाकुन्तलेति सप्त ग्रन्था एव प्रामाणिकत्वेन रचिताः सन्तीति प्रायः सर्वेषामत्रैकमत्यम्। कुन्तलेश्वरदौत्यमपि कालिदासकृतमिति डॉ० वी० राघवन्-महोदयस्याभिमतम्।

महाकविराजशेखरेण स्वकीयकाव्यमीमांसायां कविभावकयोः पार्थक्यं विवेचयता तत्राचार्याणां मतद्वैविध्यं प्रदर्शितम्। कविभावकयोर्न कश्चन भेद इति प्राचीनाचार्याणां मतम्—'कः पुनरनयोर्भेदो यत् कविर्भावयति भावकश्च कविः' (अर्थाद् अनयोर्न भेद इत्याचार्याः) 'न इति कालिदासः' पृथगेव कवित्वाद् भावकत्वम्, भावकत्वाच्च कवित्वम्[2] इति। काव्यमीमांसायां कालिदासस्य मतमेतन् समीक्षितमतमस्ति, किन्त्वेष काव्यशास्त्री कालिदासो रघुवंशादिकाव्यनाटकानां रचयितुर्महाकविकालिदासादभिन्न इति निर्णायकं किमप्यैतिहासिकं तथ्यं नोपलभ्यते।

अस्माकं संस्कृतसाहित्ये प्राक्तनकवीनां प्रायः सर्वेषु सर्वशास्त्रीयं पाण्डित्यं परिलक्ष्यते। कालिदास-माघ-श्रीहर्षप्रभृतयो महाकवयो मुख्यतः कवय आसन्, तैः कश्चन शास्त्रीयो ग्रन्थो न निरमायि, किन्तु तैः सर्वशास्त्रीयज्ञानस्य पृष्ठाधारे स्वकीयाः कृतयः कृताः। अत एव तेषां काव्येषु यत्र तत्र सर्वत्र सर्वशास्त्रीयं ज्ञानं मुखरं प्रतिभाति। महाकविकालिदासे त्वेष गुणोऽतिशयप्रभाववानिव लक्ष्यते। स सर्वशास्त्रेषु निष्णात आसीदिति तस्य काव्यनाटकानामवलोकनेनासकृत् प्रमाणितं भवति।

---

१. डॉ० भगवत्सरणोपाध्यायकृतः 'कालिदास–जीवन और साहित्य' इत्याख्यो ग्रन्थो द्रष्टव्यः। ऑफ्रेख्टमहोदयस्य वृहत्संस्कृतग्रन्थसूच्यां पञ्चत्रिंशद् ग्रन्थाः कालिदासकर्तृकत्वेनोल्लिखिताः सन्ति। मन्ये, तान् सप्त ग्रन्थानतिरिच्यान्ये ग्रन्थाः कालिदासोपनामभिरन्यैः कविभिर्विरचिताः सन्तीति।

२. काव्यमीमांसा—अ० ४।

व्याकरणं सर्वशास्त्राणां मूलमिति काव्यशास्त्रिणः स्वीकुर्वन्ति । आनन्दवर्धनेन प्रोक्तम्-'प्रथमे हि विद्वांसो वैयाकरणा व्याकरणमूलत्वात् सर्वविद्यानाम्'[१] इति । तदनुसारिणा मम्मटेनाप्युत्तमकाव्यनिरूपणावसरे तथैव प्रतिपादितम् । कालिदासोऽपि स्वकीयवैयाकरणत्वस्य प्रख्यापनमात्मनो गौरवं मनुते । स 'चतुष्टयी शब्दानां प्रवृत्तिः' इति पतञ्जलेः सिद्धान्तमनुवदन् वदति—

पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ।। (कुमार० २।१७)

मम्मटेनापि लिखितम्—'गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकारः[२] ।' उपमायाः प्रयोगेऽपि कालिदासेन यत्र तत्र स्वीयं वैयाकरणत्वमेव प्रदर्शितम्, यथा—'अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः[३]', 'अपवाद इवोत्सर्गं व्यावर्त्तयितुमीश्वरः[४]', 'धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत्[५]', 'सोऽभवद् वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः[६]' इत्यादि ।

एवमेव तेन स्वकीयं काव्यशास्त्रित्वमपि स्वीयरचनास्वनेकत्राभिव्यक्तीकृतम् । महाकविना तेनात्मनो ग्रन्थेषु काव्यशास्त्रीयस्य कस्यचन सिद्धान्तविशेषस्य प्रतिपादनं न कृतम्, यथा माघेन-'पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः[७]', 'शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते[८]',

स्थायिनोऽर्थे प्रवर्त्तन्ते भावाः सञ्चारिणो यथा ।
रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः[९] ।।

इत्यादि प्रोक्तवता स्वकीयं काव्याचार्यत्वं सुस्पष्टं प्रख्यापितम्; तथापि तस्य काव्यनाटकेष्वेतादृशानि बहूनि स्थलानि विलोक्यन्ते यत्र स भङ्ग्यन्तरेण काव्यशास्त्रीयसिद्धान्तानां स्वीयमभिज्ञत्वं स्वकाव्याचार्यत्वञ्चाभिव्यक्तीकर्तुं समुत्सुकः प्रतिभाति ।

इदानीं काव्यशास्त्रीयसिद्धान्ताननुक्रम्य महाकवेः काव्यशास्त्रीयं ज्ञानं समीक्ष्यते—

**(१) काव्यफलम्**—यश एव काव्यस्य प्रमुखं फलमिति प्रायः सर्वैरेवाचार्यैः स्थिरीकृतम् । आचार्यवामनेन काव्यस्य दृष्टादृष्टफलयोर्विवेचनं कुर्वता काव्यस्यादृष्टफलं यश एव सर्वतो महत्त्वपूर्णमिति श्लोकत्रयेण प्रत्यपादि—'प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः[१०]' इति । मम्मटाचार्येणापि काव्यफलं विवेचयता काव्यफलेषु यश एव प्राथम्येन परिगणितम्, तथा महाकविः कालिदास एव तस्योदाहरणत्वेनोपन्यस्तः—'काव्यं यशसेऽर्थकृते······कालिदासादीनामिव यशः[११]' । यशस्विकवेः कालिदासस्यापि यश एव काव्यफलत्वेनाभिमतम् । अत एव स स्वकाव्यरचनाया माध्यमेन यश एव प्रार्थयते —'मन्दः कवियशःप्रार्थी'[१२] इति ।

**(२) काव्यहेतुः**—काव्योत्पत्तिहेतूनां निरूपणं कुर्वद्भिः प्रायः सर्वैरेवाचार्यैः काव्यहेतुषु कवित्वबीजरूपायाः शक्तेरेव प्राधान्यं निरधारि । कविः सर्वं वस्तु सुन्दरं पश्यति । वस्तुनो रमणीयतां वीक्ष्य तस्याभिव्यक्तये कवेरन्तःकरणे तदनुरूपाः शब्दा अहमहमिकया समुत्पतन्ति ।

---

१. ध्वन्यालोकः १।१३ । २. काव्यप्रकाशः २।१० वृत्तिः । ३. कुमार० २।२७ ।
४. रघु० १५।७ । ५. रघु० १२।५९ । ६. रघु० ११।५६ ।
७. शिशुपालवधम् २।८ । ८. शिशुपालवधम् २।८६ । ९. शिशुपालवधम् २।८७ ।
१०. का० सू० वृ० १।१।५ वृत्तिः । ११. का० प्र०, का० २ वृत्तिः । १२. रघुवं०–१।३ ।

ततस्तेन वस्तुना सह तस्य वासनात्मकः संस्कारो य ईश्वरप्रदत्तः पूर्वजन्मसिद्धः, तस्य वस्तुनः सौन्दर्यमभिव्यक्तीकर्तुमृज्जृम्भते । फलतः काव्यसौन्दर्यस्याभिव्यक्तिर्जायते । एतमेव स्वं विचारं स श्लोकस्यास्य माध्यमेनाभिव्यक्तीकरोति—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत् सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि[1] ॥

वस्तुतो वर्ण्यवस्तुना सह कवेः भावस्थिरं जननान्तरसौहृदम् (कवित्वबीजरूपोऽनादि-संस्कारः) अपेक्षितं वर्त्तते, तदैव स सत्यं शिवं सुन्दरं काव्यं निर्मातुं क्षमो भवति ।

(३) काव्यस्वरूपम्—आचार्यैः 'काव्यम्' शब्दार्थस्वरूपमित्यभ्यधायि । सत्कवेस्तु शब्दार्थयोरपेक्षितत्वं वर्तत एव । यथाह माघः—'शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते'[2] इति । भामहेनापि प्रोक्तं यच्छब्दार्थौ सम्यग् ज्ञात्वैव कविना काव्यक्रियां प्रति प्रवर्त्तितव्यम्—'शब्दाभिधेये विज्ञाय..........कार्यः काव्यक्रियादरः'[3] । राजशेखरेणापि—'शब्दार्थयोर्यथावत् सहभावेन विद्या साहित्यविद्या' इति ब्रुवता शब्दार्थयोः साहित्यमेव काव्यमिति निरधारि । महाकवेः कालिदासस्य शब्दार्थप्रतिपत्तये शब्दार्थसाहित्यरूपिणो पार्वतीपरमेश्वरयोरनया वन्दनया—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ[4] ॥

शब्दार्थौ काव्यमिति ध्वनितं भवति । "वागर्थप्रतिपत्तये" इत्यनेन भामहस्य 'शब्दाभिधेये विज्ञाय' इत्युक्तिरपि साम्यं बिभर्ति । काव्ये शब्दार्थयोः सहभावः कालिदासस्याभिमत इति तस्यानयोक्त्यापि प्रतीयते—"तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।" (कुमार० ६।७९)

(४) काव्यसौन्दर्यम्—सौन्दर्यं कलाकारस्य परमोपास्यम्, कलायाः परमाभिव्यक्तिः । तच्च सौन्दर्यं काव्ये रसगुणालङ्कारादीनां समुचितविधानेनैवोत्पद्यते । 'सौन्दर्यमलङ्कारः' इति त्वलङ्कारवादिनामभिमतम् । काव्ये रसो ध्वनिर्वा महत् सौन्दर्यमिति ध्वनिवादी आनन्दवर्धनः—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥[5]

एतादृशमेव लावण्यमुत्पादयितुं महाकविरेष सर्वत्र यत्नवान् दृश्यत इति तस्यानेन कथनेन प्रतिभाति—"शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ।" (कुमार० १।३५)

कविताकामिन्याः सौन्दर्यसंविधाने शृङ्गाररस एव सर्वाधिकामुपयोगितामाश्रयत इत्यभिजानता कालिदासेन स्वकीयरचनासु शृङ्गारायैव महत्त्वपूर्णं स्थानं दत्तम् । सम्भवतः 'शृङ्गार एव एको रसः' इति तस्याभिमतः सिद्धान्त आसीदिति तस्यानयोक्त्याऽभिज्ञायते—"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः, शृङ्गारैकरसः स्वयं नु मदनो ......।"[6]

---

१. अभि० ५।२ ।  २. शिशुपा० २।८६ ।  ३. काव्यालङ्कारः १।१० ।
४. रघु० १।१ ।  ५. ध्वन्या० १।४ ।  ६. विक्रमो० १।१० ।

शृङ्गाररसस्तस्य महाकवेरेतावान् प्रियो यत् स मृत्युसदृशीं भयङ्करघटनामपि शृङ्गारच्छाययैव वर्णयति—

रामयन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा[1] ॥

(५) **कविपरम्परापालनम्**—विरहे एकवलयधारणम्, तदपि वामप्रकोष्ठे इति कविपरम्परा—'कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते'' (अभि० ३।११), ''···वामप्रकोष्ठार्पितं बिभ्रत् काञ्चनमेकमेव वलयम्'' (अभि० ६।६), ''कनकवलयभ्रंशरिक्तप्रकोष्ठः'' (मेघ० १।८)।

**वियोगावस्थायामेकवेणीधारणम्**—''वेणीभूतप्रतनुसलिला'' (मेघ० १।२९), ''आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा,······ ······विषमामेकवेणीं करेण'' (मेघ० २।३१), ''वसने परिधूसरे वसाना, नियमक्षाममुखी धृतैकवेणिः'' (अभि० ७।२१)। आदिकविना वाल्मीकिनापि सीताया वियोगावस्थाया वर्णने एवमेवोक्तम्—''एकवेणी धरा शय्या ध्यानं मलिनमम्बरम्।'' (सुन्दरका० २।८)।

**विरहे दिवसगणना**—''एकैकमत्र दिवसे दिवसे मदीयं नामाक्षरं गणय'' (अभि० ६।१२), ''तां चावश्यं दिवसगणनातत्पराम्'' (मेघ० १।१०)।

**मदनलेखः**—''हला! मदनलेखोऽस्य क्रियताम्, 'तुज्झ ण जाणे हिअअं'' इत्यादि (अभि० ३।१४)।

**गोत्रस्खलनम्**—

दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो।
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥ (अभि० ६।५)

एवमेवान्यासामपि कविपरम्पराणां परिपालनं कृतं कविना।

कविराजेन विश्वनाथेन कविसमयवर्णने (साहित्यदर्पणे सप्तमपरिच्छेदे २३-२५) केचन निर्देशा दत्ताः सन्ति। ते यथा—यशसि धवलता वर्ण्यते हासकीर्त्योः।

कालिदासेनापि तथैव वर्णितम्—

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु।
विभूतयस्तदीयानां पर्यस्ता यशसामिव ॥ (रघु० ४।१९)

''राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः'' मेघ० १।५८)।

**जलधरसमये मानसं यान्ति हंसाः**—''सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः'' (मेघ० १।१०),

मेघश्यामा दिशो दृष्ट्वा मानसोत्सुकचेतसाम्।
कूजितं राजहंसानां नेदं नूपुरकूजितम् ॥ (विक्रमो० ४।३०)

''गन्तुं सरः सपदि मानसमीषुरुच्चैः'' (कुमार० १७।३६)।

**पादाघातादशोकं विकसति बकुलं योषितामास्यमद्यैः**—

रक्ताशोकश्चलकिसलयः केसरश्चन्द्रकान्तः
प्रत्यासन्नः कुरवकवृतेर्माधवीमण्डपस्य।
एकः सख्या तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनाऽस्याः ॥ (मेघ० २।१७)
कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति। (रघु० ८।६२)

---

१. रघु० ११।२०।

सुवदनावदनासवसम्भृतस्तदनुवादिगुणः कुसुमोद्गमः ।
मधुकरैरकरोन्मधुलोलुपैर्वकुलमाकुलमायतपङ्क्तिभिः ॥ (रघु० ९।१८)

मालविकाग्निमित्रेऽपि दोहदस्य मनोहारि वर्णनं विद्यते[1] ।

विशिखाः कौसुमाः पुष्पकेतोः, भिन्नं स्यादस्य बाणैर्युवजनहृदयम्—

त्वमसि मया चूताङ्कुर ! दत्तः कामाय गृहीतधनुषे ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥ (अभि० ६।३)

मेघाध्वानेषु नृत्यं भवति शिखिनाम्—

धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ।
(मेघ० १।४३)

एभिः कतिपयैरुद्धरणैरिदं सुस्पष्टतां व्रजति यत् कालिदासः कविपरम्पराणां परिपालने कविसमयानामनुरोधे च यत्नवानास्ते । कालिदासः कतिपयपरम्पराणां प्रवर्त्तकोऽप्यासीत् । तद् यथा—

मुकुलजालस्य वनस्थल्या नखक्षतरूपं वर्णनम्—

उपहितं शिशिरापगमश्रिया कुसुमजालमशोभत किंशुके ।
प्रणयिनीव नखक्षतमण्डलं प्रमदया मदयार्पितलज्जया ॥ (रघु० ९।३१)
बालेन्दुवक्राण्यविकासिभावाद् बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥ (कुमार० ३।२९)

दूतकाव्यम्—संस्कृतसाहित्ये दूतकाव्यरचनापरम्परायाः प्रवर्त्तकः कालिदास एव । कालिदासेन दूतकाव्यशैल्यामनेका नवीना उद्भावनाः कृताः । तद् यथा—पटुकरणैरर्थाच्चेतनैः प्रापणीयस्य सन्देशार्थस्यापटुकरणेन मेघेन प्रापणम् । काव्यशास्त्रीयैराचार्यैरस्याः परम्पराया विरोधः कृतः । आचार्यभामह एतादृशं काव्यम् 'अयुक्तिमत्' इत्याख्ये दोषे न्यस्यति—"अयुक्तिमद् यथा दूता जलभृन्मारुतेन्दवः ।[1] विश्वनाथस्य मतेनाप्यचेतनस्य दौत्यमनुचितम् ।[2] परन्तु कालिदासस्यानेन समर्थनेन "कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु" तथाऽद्भुतकल्पनया च प्रभावितो भामहः स्वयमिदं स्वीचकार यत् सुमेधसा कृता एतादृशी कल्पना आदरणीया भवति—

यदि चोत्कण्ठया यत् तदुन्मत्त इव भासते ।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते ॥[3]

अपरा परम्पराऽस्ति दूतकाव्ये विरहवर्णने 'मन्दाक्रान्ता'छन्दसः प्रयोगः । विरहे नायकेन नायिकया वा यथाकथञ्चिन्महता कष्टेन शनैः शनैः समयो याप्यते, अतो मन्दाक्रान्तायाः प्रयोगः समीचीनो भवति ।

'मेघदूतम्' मम्मटस्य मते शापहेतुकविप्रलम्भस्य, विश्वनाथस्य मते खण्डकाव्यस्य च प्रमुखमुदाहरणम् ।

---

१. मालविका० ३।५, ३।१०, ३।१२, ३।१७ ।

१. काव्यालङ्कारः १।४२-४३ । २. सा० द० ३।४७-४८ ।

३. काव्यालङ्कारः १।४४ ।

**पात्रौचित्येन भाषाद्वयप्रयोगः—**गुरुषपक्षे संस्कृतायाः (व्याकरणदोषरहितायाः) वाण्याः, अर्थात् संस्कृतभाषायाः, स्त्रीपक्षे सुबोध्याया वाण्याः, अर्थात् प्राकृतभाषायाः प्रयोगः कालिदास्याभिमतः प्रतिभाति, यथा—

**द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव।**
**संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥**[1]

नाटकेषु तु नाट्यशास्त्रीयं नियममनुसरता पात्रौचित्येन भाषाद्वयप्रयोगो विहित एव।

**ऋतुकाव्यरचना**–महाकाव्येषु प्रसङ्गत ऋतुवर्णनं कर्तव्यमिति काव्यशास्त्रीयः सिद्धान्तः। कालिदासेन स्वकीयेषु काव्यनाटकेषु यथास्थानम् ऋतुविशेषस्य प्रासङ्गिकं वर्णनं कृतम्। तेन स्वतन्त्रम् ऋतुकाव्यमपि निर्मितम्। 'ऋतुसंहारम्' संस्कृतसाहित्ये अद्वितीयम् ऋतुवर्णनात्मकं काव्यं परवर्तिकवीनाम् ऋतुवर्णने प्रेरणास्रोतश्च। किन्तु ऋतुसंहारस्य विभागः कविना महाकाव्यवत् सर्गेषु कृत इति परम्पराप्रतिकूलं प्रतिभाति।

**च्युतसंस्कृतिदोषः परिहार्यः—**कालिदासः काव्ये च्युतसंस्कृतिदोषः परिहार्यो मन्यते। तद् यथा—"पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता। बभूव कृतसंस्कारा चरितार्थैव भारती॥" (रघु० १०।३६), "संस्कारवत्येव गिरा मनीषी" (कुमार० १।२८), अर्थात् सुसंस्कृता (व्याकरणादिसंस्कारसम्पन्ना) वाणी एव विदुषां भूषणम्, "द्विधा प्रयुक्तेन च वाङ्मयेन········ संस्कारपूतेन·······" इत्यादि वदतः कालिदासस्य काव्येषु दुष्टप्रयोगाणां परिहार एवाभिमत आसीदित्युपरितनैरुद्धरणैः प्रतीयते।

**ख्यातिविरुद्धता—**

प्राचीनपरम्पराणां परिपालने यत्नवताऽपि कालिदासेन यत्रकुत्रचित् ख्यातेर्विरुद्धमप्याचरितम्। "कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी च भवति। पुरुषस्तु रोमाञ्चितो भवति, एभिरनयोर्भावं परीक्षेत" इति वात्सायनः[2]। रघुवंशे कालिदासेनास्याः ख्यातेरनुरोधः कृतः—"आसीद् वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी" (रघु० ७।२२), किन्तु कुमारसम्भवेऽस्याः ख्यातेर्व्यतिक्रमो दृश्यते—"रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्।"[3]

**अनौचित्यम्—**

यद्यपि कालिदासेन काव्यशास्त्रीयनियमानामनुसरणे सर्वत्र सतर्कता वर्त्तिता, तथापि काव्याचार्यैस्तस्य काव्येषु यत्र तत्र दोषा उद्भाविता एव। तद् यथा—"राममन्मथशरेण ताडिता[4]" इत्यादौ शृङ्गारबीभत्सयोर्विरोधिनोरेकत्र वर्णनम्। एवमेव—"द्वयं गतं सम्प्रति

---

१. कुमार० ७।९०।
२. रघुवंशे ७।२२ टीकायां मल्लिनाथः।
३. कुमार० ७।७७, मल्लिनाथेन तु व्यतिक्रमस्यास्य समर्थनं कृतम्—"स्त्रीपुरुषयोः स्वेदरोमाञ्चाभिधानं सात्त्विकमात्रोपलक्षणम्, न तु प्रतिनियमो विवक्षितः। 'एभिः' इति बहुवचनसामर्थ्यादिति। अत एव कुमारसम्भवे 'रोमोद्गमः' इत्यादि। (रघु०७।२२ टीका)
४. रघु० ११।२०।

शोचनीयतां समागमप्रार्थनया पिनाकिनः[1]", "क्रोधं प्रभो संहर संहरेति[2]", "मौर्वी द्वितीयामिव कार्मुकस्य[3]" इत्यादयः श्लोकाः काव्यप्रकाशकारेण दोषदृष्ट्या दृष्टाः।

कुमारसम्भवे शिवपार्वत्योः सम्भोगवर्णनं तेनानौचित्यस्योदाहरणत्वेनोपन्यस्तम्—"तद्वर्णनं हि पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्[4]।" आनन्दवर्द्धनेनाप्येतत् समर्थितप्रायम्—"यत्त्वेवंविधे विषये महाकवीनामप्यसमीक्ष्यकारिता लक्ष्ये दृश्यते स दोष एव[5]।" परन्तु कालिदासस्याप्रतिमप्रतिभया प्रभावितः स तत्रैव लिखति—"तत्तु सूक्तिसहस्रद्योतितात्मनां महात्मनां दोषोद्घोषणमात्मन एव दूषणं भवति।" आनन्दवर्द्धनः 'महाकवीनां काव्यप्रसङ्गे दोषोद्घाटनमात्मनो दोषायैव कल्पते' इति मन्यते स्म।

**काव्यगुणाः**—कालिदासेन काव्यगुणानां स्पष्टत उल्लेखो न कृतः, किन्तु तेन 'अर्थवत्त्वं वाण्याः गुणः' इति निर्दिशता 'समुचितार्थाभिव्यक्तिः काव्यगुणः' इति प्रतिपादितप्रायम्। तद् यथा—"वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे" (कुमार० २।३), "सुचरितार्थपदैर्वचोभिः" (कुमार० ४।४५), "अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः" (रघु० १।२९) इत्यादि।

**काव्यरसाः**—कालिदासेन रसभावादीनां विवेचनं न कृतम्, किन्तु तेन यत्र तत्र तेषां सङ्केतोऽवश्यं कृतः। तथा हि—

**रसभावौ**—"इयं हि रसभावदीक्षागुरोः" (अभि० शा०, आरम्भे सूत्रधारः) "तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्" (कुमार० ७।९१), "गीतानुगं भावरसानुविद्धम्" (कुमार० ११।३६)।

**शृङ्गाररसः**—"शृङ्गारैकरसः स्वयं नु मदनो" (विक्रमो० १।१०)।

**करुणरसः**—"विलपन्नतिकोसलाधिपः करुणार्थग्रथितं प्रियां प्रति[6]।"

**शोकः श्लोकत्वमागतः**—

तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः।
निषादविद्धाण्डजदर्शनेन श्लोकत्वमापद्यत यस्य शोकः॥ (रघु० १४।७०)

आनन्दवर्द्धनस्य "क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः" इति महत्त्वपूर्णा उक्तिः कालिदासस्यास्य श्लोकस्यैव छायामनुसरति।

**वत्सलरसः**—"विवृद्धवात्सल्यरसोत्तराया देव्या दृशोर्गोचरतां जगाम" (कुमार० ११।१९), "निसर्गवात्सल्यरसौघसिक्ता" (कुमार० ११।२३)। कालिदासेनात्र 'वत्सलरसः' इत्यस्य स्थाने 'वात्सल्यरसः' इति पदं प्रयुक्तम्।

---

१. कुमार० ५।७१।          २. कुमार० ३।७२।     ३. कुमार० ३।५३।
४. काव्यप्रकाशः, प्रकृतिविपर्ययदोषप्रकरणम्।          ५. ध्वन्यालोकः ३।१० वृत्तिः।
६. रघु० ८।७०। "करुणः शोकरसः स एव अर्थस्तेन ग्रथितं सम्बद्धम्" इति टीकायां मल्लिनाथः।

कालिदासेन स्वपूर्ववर्त्तिनां कवीनां नाटककाराणाञ्च ग्रन्थाः सम्यगवलोकिता आसन्निति तु तस्य स्वीकारोक्त्या[1] प्रतीतिपथमायात्येव, किन्तु तेन केषामाचार्याणां लक्षणग्रन्था अनुशीलिता इति निश्चेतुमशक्यम्। स्वकीयनाटकेषु तेन नाट्यशास्त्रीयनियमानां सम्यक् परिपालनं कृतम्, तथा भरतमुनेर्नामापि गृहीतम्, अत इदं सुस्पष्टं प्रतिभाति यन्नाटकनां रचनाकाले नाट्यतत्त्वानामनुशीलने तस्यादर्शग्रन्थ आसीद् भरतमुनेर्नाट्यशास्त्रम्। विक्रमोर्वशीये भरतमुनेरुल्लेखं कुर्वता कालिदासेन प्रोक्तम्—"मुनिना (भरतेन) यः प्रयोगो भवतीष्वष्टरसाश्रयो नियुक्तः।" (विक्रमो० २।१७)।

अत्र भरतो देवानां नाट्याचार्यस्तथा अष्टानां रसानां प्रयोक्तेति कालिदासेनाङ्गीकृतम्। कालिदासस्य नाटकानां पर्यालोचनेन स नाट्याचार्य इव परिज्ञातो भवति। उदाहरणार्थम्—

**नाटकस्य प्रयोजनानि**—नाटकीयप्रयोजनस्य विषये स लिखति—

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्[2]॥

अर्थाद् नाट्यं हि देवानां कृते शान्तो नेत्रयज्ञः। रुद्रेणार्द्धनारीश्वरेण स्वशरीरे इदं नाट्यं द्विधा (लास्यताण्डवरूपेण) विभक्तम्। अस्मिन् नाटके शृङ्गारादिनानारसैस्तथा सत्त्वरजस्तम इति त्रिगुणोपेतं चरित्रं वर्ण्यते। येन एकेनैव नाट्येन विभिन्नरुचीनां लोकानां समाराधनं भवति। एतन्नाट्यवैशिष्ट्यविवेकः कालिदासस्य किञ्चिन्नवीनत्वमादधाति।

**नाटकस्य लक्षणम्**—'नाटकं ख्यातवृत्तं स्यात्' इत्यादिविधानं नाट्याचार्याणामभिमतम्। कालिदासः 'पुराणमित्येव न साधु सर्वम्[3]' इति ब्रुवन् नाटके पौराणिकताया अन्धभक्तो न प्रतिभाति; स तत्र नवीनसंविधानकमाधातुमीहते।

**नाटकस्याभिनयः**—भरतस्य मतेन वाचिकाङ्गिकसात्त्विकेति सामान्याभिनयास्त्रयः—"सामान्याभिनयो नामज्ञेयो वागङ्गसत्त्वजः[4]।"

**कालिदासः**—

अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन्।
स प्रयोगनिपुणैः प्रकृतिभिः संजघर्ष सह मित्रसन्निधौ॥[5]

अत्र कालिदासः प्रत्यक्षतो भरतमनुसरति। कालिदासोऽभिनयस्य पञ्चाङ्गत्वमपि जानीते—"इदानीमेव पञ्चाङ्गादिकमभिनयमुपदिश्य[6]……।"

---

१. "अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः।" (रघु० प्रथमसर्गस्यारम्भे) 'पूर्वसूरिभिः' पूर्वैः सूरिभिः वाल्मीक्यादिभिः' इति मल्लिनाथः। "प्रथितयशसां भास-सौमिल्ल-कविपुत्रादीनाम्" इत्यादिमालविकाग्निमित्रनाटकीयारम्भिकोक्त्या प्रतीयते यत् कालिदासेन पूर्ववर्त्तिनाटककाराणां नाटकान्यवलोकितानि।

२. मालविका० १।४। ३. मालविका० १।२।

४. नाट्शास्त्रम् २४।१। ५. रघु० १९।१३। ६. मालविका० १।६ तः परम्।

**नाट्यगुणाः**—नाट्यं स्पष्टसन्धिभेदयुक्तं विभिन्नरसेषु रागोपहितं ललिताभिनयपूर्णं रमणीयं भवति । अत्र कालिदासः—

तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् ।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् ॥ (कुमार० ७।९१)

**नाट्यरसाः**—नाट्ये भरतमुनिप्रतिपादिता अष्टौ रसाः कालिदासस्याप्यभिमता इति तस्यानयोक्त्याऽनुमीयते—

मुनिना यः प्रयोगो भवतीष्वष्टरसाश्रयो नियुक्तः ।
ललिताभिनयं तमद्य भर्ता मरुतां द्रष्टुमनाः स लोकपालः ॥[1]

नाटकेषु विभिन्नरसानां प्रयोगो मनोहारी भवति—"तस्मिन् पुनः सरस्वतीकृतकाव्यबन्धे 'लक्ष्मीस्वयंवरे' तेषु तेषु रसान्तरेषु (परिणत्) तन्मयी आसीत्" (विक्रमो० तृतीयाङ्कस्यारम्भे) ।

**नृत्यम्**–नृत्यं नाटकस्य मनोरमङ्गम् । तत्रापि सन्धि-वृत्त-गीत-भाव-रसानां योगोऽपेक्षित इति कालिदासस्याभिमतम्—"सुसन्धिबन्धं ननृतुः सुवृत्तगीतानुगं भावरसानुविद्धम्[2] ।" नृत्ये भावस्य मनोरमो योगः सहृदयहृदयानन्ददो भवति—

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद् रागबन्धः स एव ॥[3]

**दक्षिणनायकत्वम्**—"अनेकमहिलासु समरागो दक्षिणः", "द्वयोस्त्रिचतुः प्रभृतिषु नायिकासु तुल्यानुरागो दक्षिणः" इति दक्षिणनायकस्य लक्षणम् (सा० द० ३।३५); कालिदासस्य नाटकानां नायकेषु सर्वेष्वेतद् दाक्षिण्यं विद्यते । स नायकानां दाक्षिण्यं दर्शयन्नाह—"दाक्षिण्यं नाम बिम्बोष्ठि नायकानां कुलव्रतम्" (मालविका० ४।१४) ।

निषिञ्चन् माधवीं लक्ष्मीं लतां कौन्दीञ्च लासयन् ।
स्नेहदाक्षिण्ययोर्योगात् कामीव प्रतिभाति मे ॥ (विक्रमो० २।४)

**प्रयोगप्रधानं हि नाट्यम्**—नाटके प्रयोगस्यैव प्राधान्यमिति नाट्यशास्त्रीयः सिद्धान्तः कालिदासस्याप्यभिमत आसीत् । अत एव तेन मालविकाग्निमित्रे पण्डितायाः कौशिक्या मुखेन प्रोक्तम्—"प्रयोगप्रधानं नाट्यशास्त्रम्[4] ।" नाटकस्य साफल्यमेतस्मिन्नेव वर्त्तते यत् तस्य प्रयोगं दृष्ट्वा विदुषां परितोषः स्यात्—"आपरितोषाद् विदुषां न मन्ये साधु विज्ञानम्[5] ।"

---

१. विक्रमो० २।१७ । २. कुमार० ११।३६ । ३. मालविका० २।८ ।
४. मालविका० १।१५ तः परम् । ५. अभिज्ञा० १।२ ।

कालिदासेन त्रोटक[1]-छलिक[2]-चतुष्पदगीत[3]-चर्चरीगीत[4]-मयूरीमार्जने[5]त्यादिनाट्यशास्त्रीयपारिभाषिकशब्दानां सुप्रयोगः कृतः। एतत् सर्वं तस्य नाट्यशास्त्रीयसिद्धान्तानां सम्यगभिज्ञत्वं प्रख्यापयति।

कालिदासो मालविकाग्निमित्रे शर्मिष्ठायाः 'छलिक' नामनाटकस्योल्लेखं कृतवानास्ते— "देव! शर्मिष्ठायाः कृतिं चतुष्पादोत्थं छलिकम् (नाम नाट्यम्) दुष्प्रयोज्यमुदाहरन्ति" (मालविका० १।१९ श्लोकतः परम्)। मालविकाग्निमित्रस्य प्रस्तावनायां तेन भास-सौमिल्ल-कविपुत्रादीनां सादरमुल्लेखः कृतः। विक्रमोर्वशीये सरस्वतीकृत'लक्ष्मीस्वयम्बर'नामनाटकस्य चर्चा कृता— "तस्मिन् पुनः सरस्वतीकृतकाव्यप्रबन्धे 'लक्ष्मीस्वयम्बरे' तेषु तेषु रसान्तरेषु (परिषत्) तन्मयी आसीत्" (विक्रमो० तृतीयाङ्कारम्भे)। एतेनेदं सुविदितं भवति यत् कालिसासेन न केवलं नाट्शास्त्रीयसिद्धान्तानामेव, अपि तु पूर्ववर्त्तिनाटककाराणां नाटकानाञ्च सम्यक् परिशीलनं कृतमासीत्। तस्य काव्यनाटकानां पर्यालोचनया इदमपि सुस्पष्टं भवति यत् तस्य काव्य-(श्रव्यकाव्य)शास्त्रीयसिद्धान्तानामपेक्षया नाट्यशास्त्रीयसिद्धान्तेष्वभिरुचिरधिका आसीत्। अत एव तेन श्रव्यकाव्येष्वपि नाट्यशास्त्रीयसिद्धान्तानां विशेषतो निर्देशः कृतः।

कालिदासेन कोऽपि काव्यशास्त्रीयो ग्रन्थो न लिखित इति पूर्वमुक्तमेव। किन्तु पूर्ववर्त्तिना भरतेन परवर्त्तिभिरन्यैराचार्यैश्च यानि दृश्य-श्रव्यकाव्यरचनाविधानानि विनिर्मितानि तेषां सम्यक् परिपालनं कालिदासस्य रचनासु दरीदृश्यते। इत्थं प्रतीयते यत् परवर्तिभिः काव्याचार्यैस्तस्य काव्यनाटकानि पुरस्कृत्यैव स्वकीयानि लक्षणानि निरूपितानि सन्ति। बहूनां विशिष्टलक्षणानामुदाहरणानि काव्याचार्यैः कालिदाससम्बन्धीन्येव दत्तानि। तानि यथा— खण्डकाव्यस्योदाहरणत्वेन मेघदूतमेवोपन्यस्तं विश्वनाथेन, शापहेतुकविप्रलम्भस्योदाहरणत्वेन मम्मटेन मेघदूतस्यैव श्लोका उद्धृताः, मुनीन्द्रसम्मतवत्सलरसमुदाहरता विश्वनाथेन रघुवंशस्य "उवाच धात्र्या प्रथमोदितं वचः" (रघु० ३।२५) इत्यादिश्लोक एव समुद्धृतः, 'त्रोटक'-नामोपरूपकस्योदाहरणमपि विक्रमोर्वशीयमेव विश्वनाथस्य मतेन। 'पुराणमित्येव न साधु सर्वम्' इत्यस्य सबलः समर्थकः कालिदासः कतिपयनवीनविधानामप्युद्भावनां कृतवानास्ते। निष्कर्षत उपर्युक्तेनानेन विश्लेषणेनेदं सुस्पष्टतां व्रजति यत् काव्यशास्त्रस्यातीव गहनेन व्यापकेन चाध्ययनेन सम्पन्नो महाकविः कालिदासो व्याकरण-दर्शनादिशास्त्रेष्विव काव्यशास्त्रेऽप्यप्रतिमप्रतिभानवानासीदिति शम्।

● ● ●

---

१. "मारिष! परिषदेषा पूर्वेषां कवीनां दृष्टरसबन्धा। अहमस्यां कालिदासग्रथितवस्तुना नवेन त्रोटकेनोपस्थास्ये" (विक्रमो० १।१ तः परम्)।

२. "शर्मिष्ठायाः कृतिर्लयमध्या (मध्यमलययुक्ता) चतुष्पदास्ति। तस्यास्तु छलिकप्रयोगम्....." (मालविका० द्वितीयाङ्कस्यारम्भे)।

३. "मालविका उपगानं कृत्वा चतुष्पदवस्तु गायति" (मालविका० द्वितीयाङ्कारम्भे)।

४. विक्रमो० ४।११।

५. "मायूरी मदयति मार्जना मनांसि" (मालविका० १।२१)।

# अवर्गाङ्कमूलविचारः

श्रीरविशङ्करभार्गवः
अनुसन्धाता-सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

१. प्रस्तावना—सिद्धान्तज्योतिषग्रन्थेषु वर्गकर्मणो वर्गमूलकर्मणश्च व्यवहारो दृश्यते। तत्र सर्वप्रथममार्यभटीये वर्गवर्गमूलयोर्वर्णनं लभ्यते। तत्र वर्गस्य लक्षणम्—'वर्गः समचतुरस्रः फलं च सदृशद्वयस्य संवर्गः'[1] इति। अत्र वर्गेण चतुरस्रस्य क्षेत्रविशेषस्य क्षेत्रमितौ, समद्विघातरूपस्य व्यक्तगणिते बीजगणिते वा वर्गत्वेन बोधो जायते। एवमेवान्यैरपि ब्रह्मगुप्तादिभिराचार्यैरस्य चर्चा कृता वर्त्तते। तत्र वर्गराशेर्मूलं सा संख्या या वर्गिता सती वर्गराशिं जनयति। यथा १, २, ३, ४ प्रभृतयो वर्गिताः १, ४, ९, १६ प्रभृतिराशीन् जनयन्ति। अतः १, ४, ९, १६ प्रभृतिवर्गराशीनां मूलानि १, २, ३, ४ प्रभृतीनि, परं केचन राशय एवंविधाः सन्ति, ये वर्गरूपाः समद्विघातरूपा वा न भवन्ति, यथा ३, ५, ७ प्रभृतयो राशयः। अत एतेषां मूलं नास्ति। एवम् ऋणात्मिका संख्याप्यवर्गात्मिकैव। यथोक्तं भास्करेण—न मूलं क्षयस्यास्ति तस्याकृतित्वात्[2] इति।

परमत्रेदमवधेयं यत् करण्यात्मकस्य त्रयस्य वर्गरूपत्रयं वर्गरूपतां याति, परम् ऋणात्मिका संख्या कदापि वर्गरूपतां न भजते। अतस्तस्या मूलविषये ( आधुनिकसंकेतेन काल्पनिकराशेः ) निरूपणं भारतीयज्योतिषे न दृश्यते। परम् अवर्गाङ्कानामासन्नमूलानयनं बहुत्र ग्रन्थेषु दृश्यते, यथा लीलावत्यां क्षेत्रव्यवहारे भास्करेण तस्य चर्चा कृता। अत्रास्मिन् निबन्धे सिद्धान्ततत्त्वविवेकनाम्नि ग्रन्थे कमलाकरभट्टेन यदवर्गाङ्कस्य मूलविषये विवेचनं कृतं तस्य निरूपणं करिष्यते।

**तत्र विषयोपयोगिन्यः काश्चन परिभाषाः**

वर्गाङ्कः—समद्विराशिघातः, यथा $अ^2 = अ \times अ$;

अङ्केषु $१ = १\times१ = १^2$, $४=२ \times २=२^2$, $९ = ३\times३=३^2$ इत्यादयः।

**अवर्गाङ्कः**-योऽङ्को या संख्या वा समद्विघातरूपा नास्ति। यथा-३, ५, ७ इत्यादयः।

अयमाशयः—यस्याः संख्याया मूलं पूर्णसंख्यात्मकं नास्ति वा या करणीभिन्नसंख्यायाः संख्या समद्विघातरूपा नास्ति, साऽवर्गाङ्कात्मिका निश्चेया।

**मूलम्**—या संख्या समद्विघातेन वर्गं जनयति, सा संख्या वर्गात्मकराशेर्मूलम्। परं यस्यावर्गाङ्कस्य पूर्णं संख्यात्मकं मूलं न तिष्ठति, तस्य मूलं तु करणिगतमेव भवति। तस्यैव विषयस्यात्र विचारः क्रियते।

**आसन्नमूलम्**—अवर्गाङ्कस्यासन्नमूलानयनाय कमलाकरभट्टेन सूत्रं लिखितम्—

**बृहदिष्टकृतिघ्नात् स्वादवर्गाच्छेदवर्जितात्।**
**पदमिष्टोद्धृतं तत् स्यान्मूलमासन्नसंज्ञकम्॥**[3]

---

१. आर्यभटीयम्, गणितपादे ३ यः श्लोकः। २. भास्करीयबीजगणिते चतुर्थः श्लोकः।
३. सि० त० वि० स्पष्टाधिकारे श्लो० १०।

$$\text{यतः } प^2 = अ - प \ (२) \quad \therefore प = \frac{अ}{प}$$

$$\frac{अ}{आ} = ल = \frac{प^2}{आ} \text{ —(२) तः}$$

$$= \frac{प^2}{प - अं} \text{ —(१) तः}$$

$$= \frac{प^2 - अं^2 + अ^2}{प - अं^2}$$

$$\frac{(प - अं)\ (प + अं)}{प - अं} + \frac{अं^2}{प - अं}$$

$$= प + अं + \frac{अं^2}{प - अं}$$

$$\frac{\text{लब्धि + आसन्नपदम्}}{२} = \frac{ल + आ}{२} = \frac{१}{२}\left\{प + \frac{अं^2}{प - अं} + प\right\}$$

$$= प + \frac{अं^2}{२\ (प - अं)} = \frac{यो}{२}$$

$$ल = प + अं + \frac{अं^2}{प - अं} > \frac{यो}{२} = आ'$$

$$आ' - आ = प + \frac{अं^2}{२\ (प - अं)} - (प - अं) = \frac{अं^2}{२\ (प - अं)} + अं > ० \therefore आ' > आ$$

$$\therefore प > आ' > आ$$

$$प - आ' = अं' \quad \therefore आ' = प - अं'$$

$$\frac{अ}{आ} = ल = \frac{प^2}{आ'} = \frac{प^2}{प - अं'} = \frac{प^2 - अं'^2 + अं'^2}{प - अं'}$$

$$= \frac{(प - अं')\ (प + अं')}{(प - अं)} + \frac{अं'^2}{प - अं'}$$

$$= प + अं' + \frac{अं'^2}{प - अं'}$$

$$\frac{ल + आ'}{२} = \frac{यो}{२} = \frac{१}{२}\left\{प + अं' + \frac{अं'^2}{प - अं'} + प - अं'\right\}$$

$$= प + \frac{अं'^2}{२\ (प - अं')} = आ''$$

$$आ'' - आ' = प + \frac{अं'^2}{२\ (प\ अं')} - (प - अं') = प + \frac{अं'^2}{२\ (प - अं')} - प + अं' ०$$

$$= \frac{अं'^2}{२\ (प - अं')} + अं' > ०$$

$\therefore$ आ'' $>$ आ'

आ''' $>$ आ', एवं आ''' $>$ आ'' इत्यादि।

$\therefore$ आ $<$ आ' $<$ आ'' $<$ आ''' — $<$ प

$\therefore$ मुहुर्मुहुः क्रियया वास्तवासन्नं मूलं भवतीत्यत्रोपपन्नम्।

६. सावयवस्यावर्गाङ्कस्य वर्गमूलानयनविधेरयमाशयः—सावयवमवर्गाङ्कं षष्टिवर्गगुणितं कृत्वा तस्यासन्नमूलं ग्राह्यम्। शेषं सैकं कृत्वा षष्ट्या संगुण्य द्वियुग्द्विघ्नपदेन विभज्य लब्धं पूर्वागतं मूलेन युक्तं कृत्वा षष्टिभिर्विभज्यासन्नमूलं भवति[1]।

कल्प्यते सावयवोऽवर्गाङ्कः = अ

$$\text{अतः } \sqrt{\text{अ}} = \sqrt{\frac{\text{अ} \times ६०}{६०}} = \sqrt{\frac{३६०० \text{ अ}}{६०}}$$

अत्र यदि $\sqrt{३६०० \times \text{अ}}$ इत्यासन्नमूलम् = मू०

$$\text{वास्तवं मूलम्} = \text{या} + \text{मू}$$

$$३६०० \text{ अ} = (\text{मू} + \text{या})^२ = \text{मू}^२ + २ \text{ मू या} + \text{या}^२$$

$३६०० \text{ अ} - \text{मू}^२ = २ \times \text{मू} \times \text{या} + \text{या}^२ = \text{शे}$। यदि स्वल्पान्तराद् या = १

$$\text{शे} = २ \text{ मू या} + \text{या} \times १$$

$$\text{शे} + १ = २ \text{ मू या} + \text{या} + \text{या} = २ \text{ या } (\text{मू} + १)$$

$$\text{या} = \frac{\text{शे} + १}{२\text{मू} + २}$$

$$\therefore \text{वास्तवमूलम्} = \text{या} + \text{मू} = \text{मू} + \frac{\text{शे} + १}{२ \text{ मू} + २}$$

$$\therefore \text{अवर्गाङ्कमूलम्} = \sqrt{\text{अ}} = \sqrt{\frac{३६०० \text{ अ}}{६०}} = \frac{\text{मू} + \frac{\text{शे} + १}{२ \text{ मू} + २}}{६०}$$

$\therefore$ उपपन्नम्

$$\text{उदाहरणम्—पलकर्णः} = \sqrt{\text{प भा}^२ + १२^२}$$

$$= \sqrt{(५।४५)^२ + १२^२}$$

$$= \sqrt{३३।३ + १४४}$$

$$= \sqrt{१७७।३}$$

---

१. सि० त० वि० स्पष्टाधिकारे—

षष्टिवर्गगुणादङ्कान्मूलं ग्राह्यं यथागतम्।
सैकशेषं षष्टिगुणं द्वियुग्द्विघ्नपदोद्धृतम् ॥ १८ ॥
लब्धमागतमूलस्यावयवश्चेति तत् पदम्।
षष्टिभक्तं सावयवं स्वीयमासन्नमूलकम् ॥ १९ ॥

अथ करणीगतः सावयवोऽङ्कः $\text{१७७।३} = \text{१७७} + \frac{\text{३}}{\text{६०}}$

$$\text{सावयवाङ्क} \times \text{६०}^{\text{२}} = \text{३६००} \left(\text{१७७} + \frac{\text{३}}{\text{६०}}\right) = \text{६३७२००} + \text{१८०}$$

= ६३७३८० अस्य पदम्

```
                ७९८
              ______
              ६३७३८०
       ७७ |  ४९
        ७ |
      ____|______
      १४९ | १४७३
        ९ | १३४१
     _____|______
     १५८८ | १३२८०
        ८ | १२७०४
     _____|_______
          |   ५७६
```

सैकशेषम् ५७६ + १ = ५७७ × ६० = ३४६२०

```
द्वियुग्द्विघ्नपदोद्धृतम्—२ (७९८ + २) = १६००)३४६२०(२१
                                          ३२००
                                          ____
                                          २६२०
                                          १६००
                                          ____
                                          १०२०
```

स्वल्पान्तरा लब्धिः = २२

$\therefore \sqrt{\text{६३७३८०}} = \text{७९८।२२}$

६०)७९८।२२(१३।१८।२२ पलकर्णः

अतः पलकर्णः = १३।१८।२२

### ७. मूलप्रकृतिविवेचनम्

वर्गमूलं द्विविधं भवति—अङ्कात्मकं रेखात्मकं चेति। अङ्कात्मकं मूलं पूर्णसंख्यात्मकं भवति, यथा—$\sqrt{\text{४}} = \pm\text{२}$, $\sqrt{\text{९}} = \pm\text{३}$, $\sqrt{\text{१६}} = \pm\text{४}$ इत्यादीनि।

रेखात्मकं मूलम्—यदि कस्यचिज्जात्यत्रिभुजस्य भुजौ ३, ४ इत्येतौ स्तः, तदाऽनयोर्वर्गयोगस्य पदं रेखात्मकं वर्णेण द्योत्यते, यथाऽत्र कर्णमानम् '५' यदि कस्यचित् समद्विबाहुजात्यत्रिभुजस्य भुजौ प्रत्येकम् (१) रूपमितौ स्तः, तदा तस्य भुजयोर्वर्गयोगस्य मूलं कर्णेन व्यज्यते। यथाऽस्मिन् क्षेत्रे $\sqrt{\text{२}}$ तुल्यं वर्तते। अत्रेदमवधेयं यद् द्वयोः (२) रेखात्मकमूलं तिष्ठति, अङ्कात्मकं मूलं न तिष्ठति। अस्य संख्यात्मकमूलमासन्नमूलमेव गृहीतुं शक्यते। एवमेव यदि कर्णः = २ एकभुजश्च=१ तदान्यो भुजः = $\sqrt{\text{३}}$ तुल्यम्। अस्य संख्यात्मकं मूलं तु न तिष्ठति, परं रेखात्मकपूर्णं मूलम् अपरभुजेन द्योत्यमानं वर्तते। एवमेव जात्ये यदि एको भुजः = २ अपरो भुजः=१, तर्हि तस्मिन् जात्ये कर्णः = $\sqrt{\text{५}}$, अस्य रेखात्मकं मूलं तु कर्ण एव, परं संख्यात्मकं मूलं तु न तिष्ठति।

८. अवर्गाङ्कस्य रेखात्मकमेव पदं भवितुमर्हति न तु संख्यात्मकमिति प्रतिपाद्यते—

$(\pm २)^{२} = ४$    अतः $\sqrt{४} = \pm २$

$(\pm ३)^{२} = ९$    अतः $\sqrt{९} = \pm ३$

अतः $२ < \sqrt{५} < ३$

$\therefore \sqrt{५}$ २, ३ मध्यवर्ती राशिः

ननु यदि कल्प्यते यत् २, ३ मध्ये कश्चित् पूर्णोऽवयवः, तं बोधयति येन भिन्नात्मिका काचित् संख्या $\sqrt{५}$ इत्यस्य पूर्णं मूलमिति चेत्, न; अत्रोच्यते $\sqrt{५}$ इत्यस्य मानं भिन्नमभिन्नं वेति प्रश्नः । अभिन्नस्वीकृतौ ।

२ इत्यस्य वर्गः $= ४ < ५$ एवं ३ इत्यस्य वर्गः $९ > ५$

$\therefore \sqrt{५}$ २

$\sqrt{५}$ ३

$\therefore \sqrt{५}$ इत्यस्याभिन्नं मूलं नास्ति ।

अत्र यदि कथ्यतेऽस्य भिन्नं पूर्णं मूलं तिष्ठति, तदा तस्य भिन्नस्य वर्गः स्वेन गुणितोऽभिन्न एव स्यास्यति, न तु पञ्चतुल्यः पूर्णसंस्थात्मकः । यतो हि भिन्नाङ्कः स्वगुणितो भिन्नत्वं न जहाति । यद्वा 'यो हि यं निश्शेषं हरति तद्वर्गोऽपि तद्वर्गं निश्शेषं हरति' इत्यस्य विरोधेन 'यो हि यं निश्शेषं न हरति तद्वर्गोऽपि तद्वर्गं निश्शेषं न हरति' इति निश्चयाद् भिन्नाङ्कवर्गे भिन्नत्वमेव, यथा ५ इतीदं १४ इतीदम् निश्शेषं न हरति । यदि कल्प्यते—

$$\frac{१४}{५} = २।४८$$

$$\frac{१४^{२}}{५^{२}} = (२।४८)^{२} = ७।५०।२४$$

इदं तु निश्शेषं न भवति ।

यदि $\frac{१४}{५} = २।४९$ कल्प्यते

तदास्य वर्गः $= ७।५६।१$

अयमपि पूर्णाङ्को नास्ति ।

अथ यदि $\frac{१४}{५} = २।५०$ (कल्प्यते)

तदास्य वर्गः $= ८।१।४०$

अयमपि पूर्णाङ्को नास्ति ।

अथ यदि कल्प्यते सावयवस्यावर्गाङ्कस्यासन्नमूलग्रहणक्रियया पूर्णसंख्यात्मकं वर्गमूलं लभ्यते, तदापि न,

यथा कल्प्यतेऽवर्गाङ्कः सावयवः$= अ + \frac{क}{६०} = अ + क'$

तदास्य वर्गः $= अ^2 + २ अ क' + क'^2 = अ^2 + \frac{अ क}{३०} + \frac{क^2}{६०^2}$ इति ।

अत्र यदि $\frac{क^2}{६०^2}$ पूर्णाङ्कः, तदा वर्गोऽपि पूर्णाङ्को भवितुमर्हति

अत्र कल्प्यते $क = ३०$

तदा द्वितीयं पदम् $= अ \times \frac{३०}{३०} = अ$

अन्तिमे पदे $= \frac{३०^2}{६०^2} = \frac{१}{२^2} = \frac{१}{४}$ इदं निरग्रं नास्ति ।

अतः सावयवेऽप्यङ्के वर्गिते न पूर्णाङ्कलाभः। अतोऽपि सावयवाङ्कस्य मूलं पूर्णसंख्यात्मकं नैव ।

९. यदि राशिः $= \frac{अंश}{हर}$ अत्र यदि हरः अंशः

तदा राशिः$^2 = \frac{अंश^2}{हर^2}$ अत्र $हरः^2 < अंशः^2$

$\therefore$ राशि$^2$ भिन्नाङ्कः

यदि राशिः $= \frac{अंश}{हर}$ अत्र यदि $अंशः > हरः$

तदा $\frac{अंशः}{हर} = ल + \frac{शे}{हरः} = रा$

यदि $अंशः = क \times दृढांशः$, $हर = क \times दृढ हरः$

तदा $\frac{अंश}{हर} = \frac{दृढांशः}{दृढहरः} = ल + \frac{शे}{दृ ह}$

अत्र शेषो दृढहरश्च परस्परं दृढौ

यदि नैवम्, तर्हि कल्प्यते $शे = अ \times शे'$

$दृहा = अ \times दृ हा'$

$$\therefore \frac{अंश}{हर} = \frac{दृढअंश}{दृढहार} = ल + \frac{अ शे'}{दृ ढ हा'}$$

$$= \frac{ल \times अ \times दृ हा + अ शे'}{अ दृ हा'}$$

$$= \frac{(ल दृ हा' + शे')}{दृ हा'}$$

अत्र दृढांशहारयोरपवर्त्तनसम्भवः । स च न युक्तः । शेषदृढहारौ परस्परं दृढावेव ।

यदि $दृढअंशः = इष्ट \times दृहा + शे = इ\ दृहा + शे$

तदा $\frac{दृ\ अं^2}{दृहा^2} = \frac{इ^2\ दृहा^2 + २\ इ\ दृहा\ शे + शे^2}{दृहा^2}$

अत्र प्रथमखण्डम् $= \frac{इ^2\ दहा^2}{दहा^2} = इ^2$

द्वितीयखण्डे २ इ दहा×शे इतीदं दहा-सजातीयम्। अत इदं दहाभक्तं निःशेषं भवितुमर्हति।

परं $\frac{शे^2}{दहा^2}$ इदं निःशेषं न भवितुमर्हति।

अथ यदि द्वितीयखण्डम् $= \frac{२\ इ\ दहा\ शे}{द\ हा^2} = \frac{इ'\ दहा^2 + शे'}{द\ हा^2}$

$= इ' + \frac{शे'}{द\ हा^2}$

अत्र २ इ० दहा० शे $= इ' \times दहा^2 + शे'$।

तदा द्वितीयखण्डम् $= इ'$

तृतीयखण्डम् $= \frac{शे' + शे'^2}{द\ हा^2}$

अत्र यदि $शे' + शे'^2 = दहा^2$

तदा तृतीयखण्डमपि निःशेषं भविष्यति। परं तथात्वे

$$शे^2 = दहा^2 - शे'$$

अत्र वामपक्षस्य पदं $शे^2$ वर्गात्मकम्। दक्षिणपक्षस्य पदेनापि वर्गेण भाव्यम्।

तदर्थं प्रथममिदं प्रदर्श्यते यत् $शे'$ इति पदं दढहारसजातीयम्।

यथा द्वितीयपदे $\underline{२\ इ} \times दहा \times \underline{शे} = इ_1 \times दहा$, यत्र $२\ इ - शे = इ_1$

यदि $इ_1 > दहा$

तदा द्वितीयपदम् $= \frac{इ_1\ दहा}{दहा^2} - ल + \frac{शे'}{दहा^2}$

$इ_1\ दहा = ल \times दहा^2 + शे'$

$\therefore शे' = इ_1\ दहा - ल\ दहा^2$

$= दहा\ (इ_1 - ल\ दहा)$

$= इ''\ दहा$ $\quad \because$ $शे'$ इदमपि दढहारजातीयं जातम्।

$शे' = दहा^2 - इ''\ दहा$

$= दहा\ (दहा - इ'')$

$= दहा \times इ\ गु$, इ गु = इष्टगुणकः।

इदं प्रकारद्वयेन वर्गो भवितुमर्हति। अत्र $इगु < दहा$, $\therefore \frac{शे^2}{दहा^2}$

$$\text{शे}^2 = \text{इ गु} \times \text{दृहा}$$
$$= (\sqrt{\text{इ गु}} \times \sqrt{\text{दृहा}})^2$$
$$\frac{\text{शे}^2}{\text{दृहा}^2} = \frac{(\sqrt{\text{इ गु}} \times \sqrt{\text{दृहा}})^2}{\text{दृहा}^2} = \text{वर्गाङ्कः}$$

परं तथा सति मूले गृहीते $\frac{\text{शे}}{\text{दृहा}} = \frac{\sqrt{\text{इ गु}} \times \sqrt{\text{दृहा}}}{\text{दृहा}} = \frac{\sqrt{\text{इ गु}} \times \sqrt{\text{दृहा}}}{\sqrt{\text{दृहा}} \times \sqrt{\text{दृहा}}}$

एवमत्र दृढयोः शेषहारयोरदृढत्वं सिद्धम्, तन्न युक्तम् ।

अथवा $\frac{\text{शे}^2}{\text{दृहा}^2} = \frac{\text{इ गु} \times \text{दृहा}}{\text{दृहा}^2}$ अत्र यदि $\text{दृहा} = \text{इ}^2 \times \text{इ गु}$

तदा दक्षिणपक्षस्थांशस्य वर्गत्वं सिद्धयति ।

तथात्वे $\frac{\text{शे}^2}{\text{दृहा}^2} = \frac{\text{इ}^2 \times \text{इ गु}^2}{\text{इ}^4 \times \text{इ गु}^2} = \frac{\text{इ}^2 \times \text{इ गु}^2}{\text{इ}^2 \times \text{इ गु}^2 \times \text{इ}^2} = \text{वर्गाङ्कः}$

परं तथा सति पूर्वं गृहीते $\frac{\text{शे}}{\text{दृहा}} = \frac{\text{इ} \times \text{इ गु} \times 1}{\text{इ} \times \text{इ गु} \times \text{इ}} = \frac{1}{\text{इ}}$

अत्रापि दृढयोः शेषभाजयोरदृढत्वं सिद्धम्, तन्न युक्तम् ।

अतो नहि किमपि तादृशं दृढशेषं यद् वर्गो दृढहारभक्तः शुद्ध्यति, येन दृढहारसजातीयत्वं दृढशेषवर्गे स्यात् ।

तथा च तृतीयखण्डोत्थदृढशेषवर्गस्य द्वितीयखण्डोत्थशेषोनदृढहारवर्गसमत्वं न कथमपि स्यात् । तेन दृढभाज्यवर्गे दृढहारस्य वर्गेण भक्ते निःशेषत्वाभावाद् भिन्नाङ्कवर्गे भिन्नत्वेन सम्भवाद् नह्यवर्गाङ्कानामभिन्नानामङ्कात्मकं मूलम् । रेखात्मकं तु तिष्ठत्येव ।

१०. सारांशः—अनेन विवेचनेनेमे निर्गलितार्थाः—

(क) अवर्गाङ्कस्य रेखात्मकं मूलं वास्तवं भवति ।

(ख) अवर्गाङ्कस्याङ्कात्मकं मूलं वास्तवं न भवति, किन्त्वासन्नमूलानयनप्रक्रियाया वास्तवासन्नं मूलं ग्रहीतुं शक्यते ।

(ग) अवर्गाङ्कस्य पूर्णसंख्यात्मकस्य वास्तवं मूलं भिन्नात्मकं कदाचिदपि नैव भवति ।

(घ) कमलाकरभट्टस्येयं विवेचनात्मिका पद्धतिः सर्वथाऽऽधुनिकगणितविश्लेषणपद्धतिसदृशी । इयं पद्धतिः कमलाकरभट्टस्य गणितज्ञानगौरवं प्रकाशयतीति ।

सन्दर्भग्रन्थानां विवरणम्—

१. आर्यभटीयम् कृपाशंकरशुक्लसम्पादितम्, इण्डियन नेशनल साइंस अकादमी नई दिल्ली द्वारा प्रकाशितम् ।

२. भास्करीयबीजगणितम् - श्रीविशुद्धानन्दगौडकृतटीकाद्वयसहितं मास्टरखेलाड़ीलाल एण्ड सन्स द्वारा प्रकाशितम् ।

३. सिद्धान्ततत्त्वविवेकः—पूर्वार्धः, गङ्गाधरमिश्रकृतसोपपत्तिकटीकासहितः । नवलकिशोर मुद्रणालय लखनऊ द्वारा प्रकाशितः ।

४. लीलावती—श्रीदुर्गाप्रसादद्विवेदिकृतटीकाद्वययुता, नवलकिशोरप्रेस लखनऊ द्वारा प्रकाशिता ।



# विज्ञानवादशून्यवादयोः स्वरूपविमर्शः

डॉ० रामेश्वरप्रसादत्रिपाठी

प्राध्यापकः—दर्शनशास्त्रविभागे, नेशनल डिग्री कॉलेज, बड़हलगंज, गोरखपुर

अत्र प्रथमं सूचीकटाहन्यायेन विज्ञानस्य स्वरूपं विमृश्यते, शून्यवादस्य दुःखधारत्वात्। तत्र विज्ञानमेवैकं तत्त्वं ग्राह्यग्राहकोभयाकारकम्, विज्ञानात् पृथग् बहिः पदार्था असन्त एव प्रतिभासन्ते। उक्तञ्च—

विज्ञप्तिमात्रमेवैतदसदर्थावभासनात् ।
यथा तैमिरिकस्यासत्केशं चन्द्रादिदर्शनात् ॥[1]

अत्र वादे विज्ञानस्य द्वैविध्यं कथ्यते—आत्मप्रज्ञप्तिरूपमालयविज्ञानं प्रथमम्, धर्मप्रज्ञप्तिरूपं च विषयविज्ञानं प्रवृत्तिविज्ञानाभिधं द्वितीयम्। तदेतद्द्विविधमपि विज्ञानपरिणतिभूतमेव। तथा च सर्वं विज्ञेयं परिकल्पितस्वभावतया वस्तुरूपेण न विद्यते, विज्ञानं तु प्रतीत्यसमुत्पन्नतया द्रव्यरूपेणास्ति।

विज्ञानवादे परलोकस्य सत्ता नाऽभ्युपेयते, नापि जन्मान्तरसम्बन्धिनी आत्मसत्ता। उच्यते च—

तदत्र परलोकोऽयं नान्यः कश्चन विद्यते।
उपादान-तदादेय-भूतज्ञानादिसन्ततेः ॥[2]

विषयावभासनमेव बन्धः, विषयावभास-शून्यस्वरूपं कैवल्यमेव मोक्ष इति सिद्धान्तोऽत्र प्रथते। उक्तञ्च—

यदा त्वालम्बनं ज्ञानं नैवोपलभ्यते तदा।
स्थितो विज्ञानमात्रत्वे ग्राह्याभावे तदग्रहात् ॥
अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत्।
स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः ॥[3]

अशेषदुःखनिवृत्तिरूपतया तादृशविज्ञानस्य सुखरूपताऽभ्युपगम्यते। अत्र यद्यपि बाह्यार्थसत्ता नाङ्गीक्रियते, तथाऽपि पूर्वपूर्वप्रत्ययविज्ञानीयवासनावशादुत्तरोत्तरविज्ञानेष्वात्मादिनिर्भासरूपो रूपादिनिर्भासरूपश्च विषयावभासः, तत्प्रयोज्यो व्यवहारश्चाङ्गीकृत एव। विशदीकृतञ्चैतद्भाष्यकृता—

आत्मधर्मोपचारो हि विविधो यः प्रवर्तते।
विज्ञानपरिणामोऽसौ… … … … … …॥[4]

आलयविज्ञानं मूलविज्ञानपदेनापि व्यपदिश्यते, यतो हि पञ्चानां चक्षुरादिविज्ञानानां तदनुचरमनोविज्ञानयुक्तानां बीजाश्रयरूपम्, जन्मोपादानं च तत्। उक्तं च—

---

१. विंशतिका०–१।
२. शान्तरक्षितवचः, उद्धृतं तत्त्वसङ्ग्रहे।
३. त्रिंशिकाविज्ञप्तिभाष्यम्–२८।३०।
४. त्रिंशिकाविज्ञप्तिभाष्यम्–का० १।

पञ्चानां मूलविज्ञाने यथा प्रत्ययमुद्भवः ।
विज्ञानानां सह न वा तरङ्गाणां यथा जले ॥[1]

सह न वेति—युगपत्क्रमेण वा इत्यर्थः । अस्मिन् मते सर्वमपि ज्ञानं सविकल्पकं रूपादिनिर्भासं निर्विकल्पकं स्वलक्षणमात्रगोचरं वा विज्ञानातिरिक्तपदार्थाभावेऽपि तदुल्लेखितया भ्रान्तमेव । लौकिकस्तु सर्वोऽपि व्यवहारस्तात्कालिकबाधाबाधाभ्यां कल्पितः । एतन्नये विज्ञानस्य स्वप्रकाशत्वमप्येकस्मिन् स्वप्रकाशात्मके वस्तुनि कल्पिताकारभेदात् कर्मकर्तृभावमभ्युपगम्य स्वीक्रियते । यत् सत् तत् क्षणिकमिति नियमेन समेषां विज्ञानानां क्षणिकत्वमेव चकास्ति ।

**शून्यवादस्य स्वरूपविमर्शः**

शून्यवादिमाध्यमिकानां मते तु विज्ञानवादस्याप्यभावः स्वीकृतोऽस्ति । तथा हि सर्वदर्शनसंग्रहे—

"ते च माध्यमिकयोगाचरसौत्रान्तिकवैभाषिकसंज्ञाभिः प्रसिद्धा बौद्धा यथाक्रमं सर्वशून्यत्वबाह्यार्थशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादा न तिष्ठन्ते"[2] इति ।

मध्यादेरप्युक्तम्—

तत्रार्थशून्यविज्ञानं योगाचाराः समाश्रिताः ।
तस्याऽप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥[3]

तत्रैव न्यायरत्नाकरेऽपि—ज्ञानापह्नववादिनोऽपि प्रथममर्थमपह्नुत्य निर्विषयज्ञानानुपपत्तेर्ज्ञानमपह्नुवते" इत्युक्तमस्ति ।[4]

बोधिचर्यावतारकृताऽप्युक्तम्—

संवृत्तिः परमार्थश्च सत्यद्वयमिदं स्थितम् ।
बुद्धेरगोचरस्तत्त्वं बुद्धिः संवृतिरुच्यते ॥[5]

अयमाशयः—संव्रियते आव्रियतेऽनयेति संवृतिरविद्या । सा द्विधा—तथ्यसंवृतिर्मिथ्यासंवृतिश्चेति । तत्र संवृतिसत्यमदोषवदिन्द्रियैरुपलब्धं नीलादिकम्, मिथ्यासंवृतिसत्यं च दोषवदिन्द्रियोपलब्धं मायामरीचिप्रतिबिम्बादि । परम उत्तमोऽर्थः परमार्थः, अकृत्रिमं वस्तुरूपम्, यदधिगमात् सर्ववृत्तिवासनानुसन्धिक्लेशप्रहाणं भवति । सर्वधर्माणां निःस्वभावता शून्यता तथतेत्यादयः पर्यायाः । सर्वस्य हि प्रतीत्यसमुत्पन्नस्य परायत्तात्मलाभस्य प्रतिबिम्बस्येव कुतः सत्सद्भावना, यद्वक्ष्यति—

मायया निर्मितं यच्च हेतुभिर्यच्च निर्मितम् ।
यातिश्चेता तत्कुतः कुत्र याति चेत्तन्निरूप्यताम् ॥
यदन्यसन्निधानेन दृष्टं न तदम्भवतः ।
प्रतिबिम्बसमे तस्मिन् कृत्रिमे सत्यता कथम् ॥

---

१. त्रिंशिकाविज्ञप्तिभाष्यम्, का० १५ । २. स० द० स०—माधवीय। ।
३. श्लोकवार्त्तिकम् । ४. न्यायरत्नकारः । ५. बोधिचर्यावतारे नवमपरिच्छेदे ।

अपि च—

न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः ।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ।। इति ।

मूलकारिकायां चकारः सत्यद्वयस्यातुल्यबलतां समुच्चिनोति । तत्र संवृतिसत्यमवितथरूपम्, लोकस्य परमार्थसत्यं च विसंवादकं तत्त्वमार्याणामिति शेषः । सर्वभावेष्वेतत्स्वभावद्वयं वर्तते । यदाह—

सम्यग्मृषा दर्शनलम्बमानं रूपद्वयं बिभ्रति सर्वभावाः ।
सम्यग्दृशां यो विषयः सतत्त्वं मृषादृशां संवृतिसत्यमुक्तम् ।।

अपि च—

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृतिसत्यं च सत्यं च परमार्थतः ।।

सांवृतस्य सत्यत्वोक्तिषु लोकानुरोधेन । वस्तुतस्तु परमार्थं एवैकं सत्यमिति न क्षतिः ।

परमार्थतो रूपमाह—"बुद्धेरगोचरस्तत्त्वम्" । बुद्धेः सर्वज्ञानानामगोचरः सर्वप्रपञ्चनिर्मुक्तस्वभावः परमार्थसत्यं कथमिव प्रतिपाद्यम् । तथाऽपि श्रोतॄणामनुग्रहाय संवृत्या निदर्शनेन किञ्चिदभिधीयते । यथा तिमिरप्रभावात्तैमिरिकः सर्वमाकाशदेशं केशोण्डुकमण्डितमितस्ततो मुखं विक्षिपन्नपि पश्यति, तं तथा कुर्वन्तमवलोक्य तैमिरिकस्तत्समीपमुपसृत्यापि न किञ्चित् पश्यति, तस्मै यथाभूतमसौ वदति—नात्र केशाः सन्तीति । न च तेन तथा प्रतिपादयताऽपि कस्यचित् प्रतिषेधः कृतो भवति विधानं वा, तच्च केशानां तत्त्वं यत्तैमिरिकः पश्यति, नातैमिरिकः । तदेवमविद्यासम्बन्धवशाद् बाला यदेतत्स्कन्धधात्वायतनादिस्वरूपं पश्यन्ति, तदेषां सांवृतं रूपम् ।

येषां समस्ता अविद्यावासना निरस्ता, ते बुद्धास्तानेव स्कन्धान् येन स्वाभावेन न पश्यन्ति, तदेषां परमार्थसत्यम् । सा च शून्यता न भावाद् व्यतिरिक्ताऽस्ति, भावस्यैव तत्स्वभावत्वात् । बोधिचर्यावतारे त्वर्थद्वयस्यासत्त्वभावनाया दार्ढ्यें निर्विषयस्य विज्ञानस्यापि प्रशमो भवतीत्युक्तमस्ति । तथा हि—

यदा न भावो नाभावो मतेः सन्तिष्ठते पुरः ।
तदाऽन्यगत्यभावेन निरालम्बा प्रशाम्यति ।।[1]

सर्वशून्यतायां त्रासाशङ्काऽपि तत्रैव समाहिताऽस्ति । तथाहि—

यद् दुःखजननं वस्तु त्रासस्तस्मात् प्रजायताम् ।
शून्यता दुःखशमनी ततः किं जायते भयम् ।।
यतस्ततो वाऽस्तुभयं यद्यहं नामकिञ्चन ।
अहमेव न किञ्चिच्चेद्भयं कस्य भविष्यति ।।[2]

तस्मादहमर्थः कल्पनामात्रम्, शून्यमेवभाति निश्चितम् । उक्तं च—

दुःखहेतुरहङ्कार आत्ममोहात्तु वर्द्धते ।
ततोऽपि निवर्त्यश्चेद् वरं नैरात्म्यभावना ।।[3]

---

१. बो० अ० ९।३५ । २. बो० स० अ० । ३. अभिसमयालङ्कारे—९२ पृ० ।

इदमत्र विचार्यते—यथा द्विचन्द्रादि आलम्बनविषयीक्रियते, परन्तु तन्नास्त्येव, ततश्च सर्वधर्माणामस्तित्वं सुतरामापद्यत इति चेन्नास्ति एव, ततश्च सर्वधर्माणामस्तित्वं सुतरामापद्यत इति चेन्नास्ति नः काऽपि हानिः। यतो हि देवदत्ताभिधस्याभावस्यापवादान्तस्य हन्तरि यज्ञदत्तोऽभिधे स्वभावे समारोपान्ते तच्छून्यतया हते प्रादुर्भावः।[१]

आर्यदेवदत्तस्तु विज्ञानस्वरूपस्य पुंसोऽपि शून्यत्वमाचष्टे—

दृश्यते सर्वगः कैश्चित् कैश्चित् कायमितः पुमान्।
दृश्यतेऽणुमितः कैश्चित् प्राज्ञैर्नास्तीति गम्यते ॥[२]

पुनश्च तत्रैव—

यद्यशून्यं भवेत् किञ्चित् स्याच्छून्यमपि किञ्चन।
न किञ्चिदस्त्यशून्यं च कुतः शून्यं भविष्यति ॥[३]

अनया पद्धत्या सर्वशून्यताया अपि सत्तां न स्वीचकार। प्रज्ञापारिमितायामपि "निर्वाणं मायोपमं वदामि" इत्युवाच।

सर्वं फेनप्रतीकाशमसारं बुद्बुदोपमम्।
निरात्मकमनित्यं च मायामरीचिकासमम् ॥[४]

"तस्मादशून्येन विना शून्यं न भवति, तेनाविना च शून्यं नाम न किञ्चिदस्तीति सिद्धम्" इत्यार्यदेवः।

● ● ●

---

१. अभिसमयालङ्कारे ३६० पृ०।
२. माध्यमिकवृत्तिः।
३. मा० वृ०।
४. मा० वृ०।

# चार्वाकमतेन ज्ञानस्वरूपम्

स्वामी परमानन्दः 'प्रज्ञाचक्षुः',
अनुसन्धाता–सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

चार्वाकमतेन ज्ञानं द्विविधम्—यथार्थम्, अयथार्थञ्च। तत्र यथार्थं ज्ञानमर्थाविसंवादिरूपमेकविधमेवेन्द्रियार्थसन्निकर्षजन्यम्। चार्वाका हि प्रत्यक्षमात्रं प्रमाणमिति सङ्गिरन्ते। यथोक्तं बार्हस्पत्यसूत्रे—'प्रत्यक्षमेव प्रमाणम्',[1] 'प्रत्यक्षमेवैकं प्रमाणम्'[2] इति च। अत एव यः प्रत्यक्षतो नोपलभ्यते पदार्थः, स नास्त्येवेति चार्वाकाणां सिद्धान्तः।

इदं हि प्रत्यक्षं चार्वाकमतेन चाक्षुषमात्रमेव प्रथमतोऽभिप्रेतमिति प्रतीयते, पश्चाच्च चार्वाकविशेषैः पञ्चेन्द्रियजन्यप्रत्यक्षमपि स्वीकृतमिति गुणरत्नविरचितायाः षड्दर्शनसमुच्चयवृत्तेरवलोकनेनावगम्यते।[3]

प्रत्यक्षमात्रप्रामाण्यस्वीकारेणेदमपि स्पष्टमेव यच्चार्वाकमतानुसारेण यत्प्रत्यक्षतो नोपलभ्यते तन्नास्त्येव। अत एवानुमानादीनामप्रामाण्यमपि दण्डापूपायितम्।

अनुमानाप्रामाण्यव्यवस्थापनाय चार्वाकाणामयं तर्कः—अनुमानं व्याप्तिज्ञानम्, तदधीनं परामर्शज्ञानं वा मन्यते परैः[4]। तत्र व्याप्तिज्ञानं निश्चितं न सम्भवत्येव। 'यत्र यत्र धूमस्तत्र तत्र वह्निः', 'यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावः' इत्येवंक्रमेणान्वयव्याप्तिस्वरूपम्। व्यतिरेकव्याप्तिस्वरूपं चानुमानप्रामाण्यवादिनामभिमतम्। तत्र महत्यस्मिन् संसारे को जानाति यद् यत्र यत्र धूमस्तत्र तत्र वह्निरस्त्येवेति, यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावोऽप्यस्त्येवेति। तथा च व्यभिचाराभावानिश्चयप्रयुक्तेन व्याप्तिनिश्चयाभावेन दूरापास्ताऽनुमानप्रामाण्यकथेति[5]।

किञ्चानौपाधिकः सम्बन्धो व्याप्तिरिति लक्षणम्, येऽपि स्वाभाविकः सम्बन्धो व्याप्तिरिति वर्णयन्ति, तेषामपि स्वाभाविकत्वमुपाध्यभाववत्त्वमेव। उपाधिश्च साध्यसमव्यापकत्वे सति साधनाव्यापक एव, तत्र चातीतानागतवर्तमानानामुपाधीनां प्रत्यक्षासम्भवात्। उपाध्यभावनिश्चयाभावेनोपाधिविधुरत्वं धूमवह्निसम्बन्धेऽपि दुर्ग्रहमेवेति कथमनुमानं प्रमाणम्? या तु धूमदर्शनाद् वह्निमनुमाय प्रवृत्तिः क्वचिज्जीवानाम्, सा सम्भावनामात्रेणैव। यच्च क्वचिदेवंविधायां प्रवृत्तौ साफल्यमपि लभ्यते, तदप्याकस्मिकमेवेति नानुमानप्रामाण्यस्वीकारापेक्षापि[6]। अत एव महाभारतटीकायां नीलकण्ठेनाप्युक्तम्—"शतशः सहचरितयोरपि व्यभिचारदर्शनात् कथं वह्न्यादिव्यवहारानुमानम्?" इति। एवमेव शब्दादिनाऽपि व्याप्तिग्रहाभावो माधवेनोक्तः।

---

१. 'चार्वाकदर्शन की शास्त्रीय समीक्षा' नाम्नि पुस्तके पृ० १३९ उद्धृतम्।
२. तदेव—पृ० १३८।
३. षड्दर्शनसमुच्चयवृत्तिः, पृ० ३०१; षड्दर्शनसमुच्चयमणिभद्रवृत्तिः, पृ० ६५।
४. न्यायकोशः—अनुमानपदार्थः। ५. स० द० सं०, पृ० ८–१०।
६. स० द० सं०, पृ० १०–१२।

षड्दर्शनसमुच्चयव्याख्याता गुणरत्नस्तु मन्यते—यदनुमानं दैनन्दिनव्यवहारसाधनायानायासेन लब्धपदं तच्चार्वाकैरिष्यते। यत्पुनः स्वर्गापूर्वादिविषयं न चेष्यते तत् स्वर्गापूर्वादिव्यवहारासाधकत्वात्। अयं हि तदीयो ग्रन्थः—'विशेषः पुनश्चार्वाकैर्लोकयात्रानिर्वाहणप्रवणं धूमाद्यनुमानमिष्यते क्वचन, न पुनः स्वर्गादृष्टादिप्रसाधकमलौकिकानुमानमिति'[1] इति।

सिद्धान्तबिन्दुन्यायरत्नावल्यवलोकनेन पुनः प्रतीयते यद् मन आत्मवादिप्रभृतयश्चार्वाकविशेषाः[2] स्वीकुर्वन्त्येवानुमानमपि।

एवमेव शब्दोऽपि न प्रमाणम्, वेदादेरनाप्तवाक्यतया तत्र प्रामाण्यासम्भवात्। अर्थं प्रमाय प्रमाता वाक्यं प्रयुञ्जानः प्रमाणपदवीमारोहति, नान्यथा। न च स्वर्गापूर्वादेः प्रमा शक्या, प्रत्यक्षमात्रेण प्रमाणेन तज्ज्ञानासम्भवात्। तथा चाप्रमितमर्थं प्रतिपादयन् वेदादिशास्त्रनिर्माता कश्चन धूर्त एव न प्रमाणभूतः। अत एव सर्वदर्शनसंग्रहे बृहस्पतिः—

न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता॥
पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते॥
त्रयो वेदस्य कर्त्तारो भण्डधूर्तनिशाचराः।
जर्भरी तुर्फरीत्यादिपण्डितानां वचः स्मृतम्[3]॥ इति।

यानि तु लौकिकवाक्यानि तदर्थं विज्ञाय सम्भावनामात्रात् प्रवृत्तिः[4], आकस्मिकं तत्साफल्यं चेति सिद्धं प्रत्यक्षमात्रं प्रमाणम्, प्रत्यक्षमात्रं च यथार्थज्ञानमिति।

**सम्प्रति चार्वाकमतेन प्रमेयं निरूप्यते**

प्रमाणेनाधिगतोऽर्थः प्रमेयम्। प्रमाणं च प्रत्यक्षमेवेति निर्णीतम्। तथा च प्रत्यक्षप्रसिद्धानि पृथिव्यप्तेजोवाय्वाख्यानि तत्त्वान्येवात्र मते प्रमेयाणि, नेतराणि। अत एव 'पृथिव्यप्तेजोवायुरिति तत्त्वानि'[5] इति तेषां वचनमन्यत्र संगृहीतं दृश्यते। मोक्षधर्मस्थनीलकण्ठटीकावलोकनेनेदमवगम्यते यदेतानि भूतानि क्रमेण खरस्नेहेरणौष्ण्ययुक्तानि सन्ति इति।[6]

---

१. षड्दर्शनसमुच्चयवृत्तिः, पृ० ३०६; २. सिद्धान्तबिन्दुन्यायरत्नावली, पृ० १०६-७।
३. स० द० सं० पृ० १३-१४; नै० च० १७।३९। ४. स० द० सं०, पृ० १२।
अत्र भारतव्याख्यायां नीलकण्ठेन विशेष उक्तः—यथाऽन्येऽपि वैशेषिकादयो नोरीकुर्वन्ति शब्दं प्रमाणत्वेन, तथैव चार्वाका अपि। वैशेषिकादयो हि शब्दमन्तर्भावयन्ति, अनुमाने चार्वाकाः पुनरभ्युपगच्छन्ति यत् स्वतः साक्षात्कृतार्थस्य शब्देन प्रतिपादनात् परं प्रत्याययितुं वर्त्ततां तत्प्रत्यक्षस्यैव प्रामाण्यम्, न शब्दस्येति। अतो न शब्दः प्रमाणम्। ( शान्तिपर्वणि, मोक्षधर्मे २१८-२० )।
५. भामती ३।३।५४; न्यायरत्नावली, पृ० ११८।
६. नीलकण्ठी, मोक्षधर्मपर्वणि २१८-२३।

चार्वाकमतेऽपि हि क्षणभङ्गो बौद्धमतवदिष्टः, यथा ह्यर्थक्रियाकारित्वं सत्त्वम्। तच्च जलधरपटलवत्क्षणिकमेवेत्युपपादयन्ति बौद्धाः, स्थिरत्वपक्षे क्रमयौगपद्याभ्यामर्थक्रिया-व्यवस्थानुपपत्तेः। तथैव चार्वाकाणामपि सिद्धान्तः। एतच्च विस्तरेण गौडब्रह्मानन्देन सिद्धान्त-बिन्दुटीकायां निरूपितमतिनैपुण्येन[1]। तत्रैवेदमपि चिन्तितं यत्क्षणान्तरे समुपलभ्यमानं पृथि-व्यादि पूर्वक्षणवृत्तिपृथिव्यादितो भिन्नमेव सर्वथा, प्रत्यभिज्ञा च साजात्यादिति।

उक्तात् पृथिव्यप्तेजोवाय्वाख्याद् भूतचतुष्टयादेवेदं सर्वं जगदुत्पन्नम्। एतच्च परस्ताद् व्याख्यास्यते। परवर्त्तिनश्चार्वाकाः पुनर्मनसः प्राणस्य च सत्त्वमभ्युपगतवन्तः।

**मनः**—एतच्चान्तःकरणम्। अस्य पृथिव्या उत्पत्तिरिष्टा चार्वाकाणाम्। एतच्च समर्थ्यते सिद्धान्तबिन्दुव्याख्यायाम् **'भूतकार्यत्वेनाङ्गीकृतयोः प्राणमनसोः'**[2] इति नारायणतीर्थो-क्त्या **'भौतिकयोः प्राणमनसोः'**[3] इति गौडब्राह्मानन्दोक्त्या च। मनसो भूतकार्यत्वञ्च **'अन्नमशितं त्रेधा विधीयते, तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यमस्तन्मांसम्, योऽणिष्ठस्तन्मनः'** इति छान्दोग्यश्रुत्यापि[4] समर्थितमेव।

मन एवात्मेति वादिनां चार्वाकविशेषाणां मते त्वनुभवस्मरणयोः सामानाधिकरण्यम्, कृतहान्यकृताभ्यागमदोषाभावं चोपपादयितुमक्षणिकमेव मनः, अत एव च नित्यमिति सिद्ध्यति। एतच्च—**'मनस्तर्हीच्छादेरधिष्ठानं भविष्यति, तद्धि नित्यमेकं सर्वविषयकं भौतिकमिति न प्रक्रान्तदोषैः स्पृश्यते'** इति न्यायमञ्जरीनिर्देशादवगम्यते।

**प्राणः**—प्राणोऽप्यात्मत्वेन कैश्चिच्चार्वाकविशेषैः स्वीकृत एवेत्यात्मस्वरूपनिरूपण-प्रसङ्गे वक्ष्यते। प्राणस्यापि भौतिकत्वं छान्दोग्ये[5] श्रुतमेवेति न भूतमात्रसत्त्ववादिनां चार्वाकाणां तदभ्युपगमो विघातकः सिद्धान्तस्य।

**आकाशम्**—एतच्च पराभ्युपगतं द्रव्यं रूपाभावान्न प्रत्यक्षगोचरमिति परेषामपि सम्प्रतिपन्नमेव। प्रत्यक्षमात्रप्रामाण्यवादिनश्चार्वाकाः, अत एवाकाशस्य सत्त्वं नाभ्युपगच्छन्ति, किन्तु **'आवरणाभावमात्रम्'** एतदिति निरूपयन्ति। अत एवोक्तं मधुसूदनेन सिद्धान्तबिन्दौ—**'आवरणाभावत्वेनाभिमतस्य स्थिरस्यासत आकाशस्य'**[7] इति।

**समवायः**—समवायो हि नित्यः सम्बन्धात्मकः पदार्थः पराभ्युपगतः। तत्र सतो नित्यत्वासम्भवाद् नित्यस्य ज्ञानाजनकत्वात्, समवाये समवायान्तरानभ्युपगमे तस्य वृत्त्यभावात्, अभ्युपगमे वाऽनवस्थानाद् न समवायः स्वीकार्य इति चार्वाकाणां सिद्धान्तः[8]।

---

१. न्यायरत्नावली, पृ० ११८–११९; २. नारायणी, पृ० १२०।
३. न्यायरत्नावली, पृ० १२०; ४. छा० उ०–६।५।१।
५. न्यायमञ्जरी, पृ० ४४१ ( विजयानगरम् ); ६. छा० उ -६।५।२।
७. सिद्धान्तबिन्दुः, पृ० ११९।
८. न्यायरत्नावली, पृ० ११७; अद्वैतब्रह्मसिद्धिः पृ० १०१।

**सामान्यम्**—एतदपि भिन्नेष्वभिन्नत्वबुद्धिकारणं स्वीकृतं नैयायिकादिभिः। चार्वाकाः पुनर्व्यक्तित एव परस्परभेदोपपत्तेः, नित्यस्य ज्ञानाजनकत्वात्, सत्त्वस्य क्षणिकत्वाच्च सामान्यमपि[१] नोरीकुर्वन्ति।

**सुखदुःखे**—भूतानुभवजन्येऽनुकूलप्रतिकूलवेदनीये सुखदुःखे चार्वाकाणामभिमते। इमे एव क्रमेण धर्माधर्मावपि। यद्वा काम एव[२] धर्मः।

**सृष्टिप्रक्रिया**—पृथिव्यप्तेजोवायवश्चत्वारः पदार्थाश्चार्वाकाणामभिमता इति पूर्वमुक्तमेव। एतेषां सूक्ष्मतमं स्वरूपं त्र्यणुकात्मकमेव, न द्व्यणुकम्, न वा परमाणुः, प्रत्यक्षमात्रेण प्रमाणेन परमाणुद्व्यणुकसत्त्वासमर्थनात्। अत एवाद्वैतब्रह्मसिद्धौ **'त्र्युटचन्यदप्रामाणिकत्वेन'**[३] इत्युक्तम्, न्यायरत्नावल्यां च **'घट इत्युपलभ्यमानास्त्रुटय**[४] **एव हि घटस्वरूपाः'** इत्युक्तम्। अत एव नावयवी चार्वाकाणां सम्मतः, किन्तु भूतचतुष्टयत्र्यणुकपुञ्जमात्रमिदं सर्वं जगत्। अत्र रूपादिगुणा अपि द्रष्टाः, न तत्त्वान्तरम्, भूतचतुष्टयात्, किन्तु भूतचतुष्टयपरिणामविशेषा एव ते। यथोक्तं भामत्याम्—**'भूतपरिणामभेदो रूपादिर्न भूतचतुष्टयादर्थान्तरम्'**[५] इति। अयं च सृष्टिक्रमः क्षणिकत्वेऽपि सर्वार्थानां न नूतनः, किन्तु प्रवाहानादिरेव, प्रलयानभ्युपगमात्। यच्चैतावताऽपि वैषम्यं पदार्थेषु दृश्यते; तदपि नाप्रामाणिकाद्यदृष्टादिनिबन्धनम्, अपि तु स्वाभाविकमाकस्मिकमेव[६] वा ज्ञेयम्।

शरीरमपि भूतचतुष्टयत्र्यणुकपुञ्ज एव, न तत्त्वान्तरम्। अत एव **'क्षणिकचतुष्टयत्रुटिपुञ्जरूपो देहः'**[७] इत्युक्तं चार्वाकमतनिरूपणावसरेऽद्वैतब्रह्मसिद्धौ। इदमेव शरीरं चेतनम्। अत्र चैतन्यं किण्वादिभ्यो मदशक्तिवत् प्रत्येकमचेतनत्वेऽपि भूतस्य। अत एव बार्हस्पत्यं वचः—**'किण्वादिभ्यो मदशक्तिवद्विज्ञानम्'**[८] इति। तदपि चैतन्यं न भूतचतुष्टयादर्थान्तरम्, अपि तु भूतपरिणामभेद एवेति बोध्यम्। यथाहुः शारीरकभाष्ये भामतीकाराः—**'भूतपरिणामभेद एव चैतन्यम्, न भूतेभ्योऽर्थान्तरम्'**[९] इति। शरीरसम्बद्धान्येतानीन्द्रियाण्यप्येवमेव भूतपरिणामभेदा एव। इन्द्रियाणां भौतिकत्वं च नैयायिकादीनामपि सम्मतमेव। तदेवमुपपन्नं समस्तं जगत् चतुर्णामेव प्रत्यक्षदृष्टानां पृथिव्यप्तेजोवाय्वाख्यानां भूतानां त्र्यणुकानां पुञ्जात्मकं सद् भूतचतुष्टयपरिणाममात्रम्, न पुनस्ततोऽर्थान्तरमिति।

इयमेव प्रत्यक्षमात्रप्रामाण्यवादिनां चार्वाकाणां शास्त्रेषु प्रतिपादिता सृष्टिप्रक्रिया।

**आत्मा**

शरीरेन्द्रियादिव्यतिरिक्त आत्मा स्वकर्मपरिपाकवशादिह लोकपरलोकगामी मन्यते परैः, चार्वाकास्तु भूतचतुष्टयत्रुटिपुञ्जमात्रं शरीरमेवात्मेति[१०] प्रतिपद्यन्ते। चैतन्यं च शरीरा-

---

१. न्यायरत्नावली, पृ० ११७; अद्वैतब्रह्मसिद्धिः, पृ० १०१।
२. सर्वसिद्धान्तसंग्रहः—१५-१६;
३. अद्वैतब्रह्मसिद्धिः, पृ० १०१।
४. न्यायरत्नावली, पृ० ११७;
५. भामती—३।४।५४ (पृ० ८१४)।
६. न्यायरत्नावली, पृ० ११८;
७. अद्वैतब्रह्मसिद्धिः, पृ० ९९।
८. बृहस्पतिसूत्रम्, स० द० सं०, पृ० ७;
९. भामती—३।।५४ (पृ० ८१४)।
१०. अद्वैतब्रह्मसिद्धिः, पृ० ९९; ब्र० सू० शो० भा० ३।३।५३; गीता—मधु० १६।११।

देवोत्पन्नं[1] भूतपरिणामात्मकम् । तथा च चेतनं शरीरमेवात्मा । स च यावत्कालं प्रवाहपतितस्तिष्ठति तावत्कालमेव सत्त्वं पुरुषस्य न मृत्योः पश्चात् क्वचित् पुरुषावस्थितिः । अत एव 'न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः' इति प्रसिद्धम् । एतस्यात्मनः शरीराभिन्नस्य अर्थकामावेवापेक्षितौ, एतयोरेव पुरुषार्थत्वात् । अद्वैतब्रह्मसिद्धौ तु 'काम एवैकः पुरुषार्थः'[2] इत्युक्तम् । चार्वाकमतेन तत्रार्थस्य काममूलकस्य कामफलस्य च कामेऽन्तर्भावमभिप्रेत्यैतदुक्तमिति प्रतीमः । शरीरात्मवादपक्षे शरीरस्यावस्थाभेदभिन्नत्वेऽपि स्मरणादिकं प्रवाहान्तःपातिनां मध्ये पूर्वपूर्वसंस्कारस्योत्तरोत्तरनिष्ठसंस्कारजनकत्वादिनोपपाद्यम्[3], बौद्धादिवत् । स्थूलोऽहं कृशोऽहमित्याद्यनुभवादपि[4] शरीरात्मवादसिद्धिः ।

एतावता शरीरात्मवाद उपपादितः । सर्वत्र ग्रन्थे शरीरात्मवादस्य चार्वाकमतत्वेनोल्लेखाज्ज्ञायते यदयं पक्षः शरीरात्मवादश्चार्वाकनाम्ना प्रसिद्धेष्वात्मविषयकनानावादेषु प्राचीनतमः । एतदतिरिक्त इन्द्रियात्मवादश्चार्वाकविशेषस्य शास्त्रेषु वर्णितः प्राप्यते । 'अहं काणः', 'अहमन्धः', 'अहं बधिरः'[5] इत्यादिप्रतीतौ काणत्वादेरिन्द्रियधर्मत्वेन प्रसिद्धस्याहंपदार्थवृत्तित्वसिद्धेरात्मा नेन्द्रियातिरिक्त इति इन्द्रियात्मवादिनामभिप्रायः । इन्द्रियात्मवादिनः 'ते ह प्राणाः प्रजापतिं पितरमेत्योचुः'[6] इति छान्दोग्यश्रुतिमपि स्वपक्षानुकूलतयोपन्यस्यन्ति ।

इन्द्रियात्मवादस्यापि परस्तात् स्वरूपद्वयं स्वीकृतम्—प्रत्येकेन्द्रियात्मवादः, समुदितेन्द्रियात्मवादश्चेति[7] । तत्रापि प्रत्येकेन्द्रियात्मवादस्य चक्षुरात्मवादस्त्वगात्मवाद इत्यादिप्रकारेण पञ्चविधत्वम्, समुदितेन्द्रियात्मवादस्यापि शरीरविशेषे यथासम्भवमिन्द्रियस्येन्द्रिययोरिन्द्रियाणां वा भावाऽभावाभ्यामनेके प्रकाराः सम्भवन्ति ।

इन्द्रियात्मवादातिरिक्तः प्राणात्मवादोऽपि केषाञ्चित् चार्वाकाणां प्रसिद्धः[8] । अत्र च प्राणाभावे निरर्थकत्वमिन्द्रियस्येन्द्रियाणां वेत्यनुकूलस्तर्कः । 'अहं पिपासुः' इत्याद्यनुभवबलादपि प्राणात्मवादसिद्धमेवेच्छन्ति, अमितपीतादिपरिणामस्य प्राणादिवायुधर्मत्वात्[9] । 'अन्योऽन्तर आत्मा आनन्दमयः'[10] इति तैत्तिरीयश्रुतिरपि प्राणात्मवादसाधिकेत्यपि हि मतं प्राणात्मवादिनाम् ।

मन एवात्मेत्यपि चार्वाकविशेषाणां मतान्तरम्[11] । अयमाशयो मन-आत्मवादिनाम्—शरीरमिन्द्रियाणि प्राणाश्च मनोऽधीनव्यापारा मनोऽपेक्षया स्वस्याप्राधान्यं प्रतिपादयन्त्येव । अत एव मनसि सुषुप्त्यवस्थायां विलयने सर्वेषां व्यापारो निरुध्यत इत्यभिप्रेतं परेषामपि दार्शनिकानाम् । 'अन्योऽन्तर आत्मा मनोमयः'[12] इति तैत्तिरीयागमोऽपि मन-आत्मवादेऽनुकूल इति भावः ।

---

१. तत्त्वोपप्लवसिंहः, पृ० ८८; त्रिषष्टिशलाकापुरुषचरितम्—१।१।१३२-१३३ ।
२. अद्वैतब्रह्मसिद्धिः, पृ० ३९;
३. न्यायमञ्जरी, पृ० ४३७, ४३९ ।
४. वेदान्तसारः, पृ० ७; स० द० सं०, पृ० ७;
५. वेदान्तसारः, पृ० ७ ।
६. छा० उप० ५।१।७;
७. सिद्धान्तबिन्दुः, पृ० १०७ ।
८. वेदान्तसारः, पृ० ७;
९. वेदान्तसारः, पृ० ७;
१०. तै० उ० २।२।१ ।
११. वेदान्तसारः, पृ० ७; न्यायमञ्जरी, पृ० ४४१ (विजयानगरम्) ।
१२. तै० उ० २।३।१ ।

तदेवं निरूपितो विविध आत्मविषयको वादश्चार्वाकाणाम् । अत्र चार्वाकग्रन्थाभावादितस्ततो निरूपितं चार्वाकसम्मतत्वेन स्वीकृतं मतमेवास्माभिरुपस्थापितम् । तत्राप्येकस्य मतस्यानेकत्रोपलम्भात् सौकर्यार्थं न सर्वेषां ग्रन्थानां समुल्लेखः सर्वत्र कृतः ।

**परलोकाभावः**

उक्तेषु विविधात्मवादेषु नैकोऽपि वादस्तादृशमात्मतत्त्वं प्रसाधयति यत् परित्यज्येहलोकं परलोकगामि स्यात् । तथा च परलोकिनोऽभावे किमर्थं परलोकस्वीकारः ? न च प्रत्यक्षेण प्रमाणभूतेन कश्चन परलोकः स्वर्गो वा नरको वा दृश्यत इति । न परलोकास्तित्वसिद्धिः । अत एव **'परलोकिनोऽभावात् परलोकाभावः'**[1] इति चार्वाकाचार्यवचनम् । भौतिकसुखोत्कर्ष एव स्वर्गः, भौतिकदुःखोत्कर्षश्च नरकपदाभिधेय इति चार्वाकसिद्धान्तः ।

**मोक्षस्वरूपम्**

चार्वाका हि दुःखात्यन्तनिवृत्तिमपवर्गं स्वीकुर्वते । परमेतेषां मते दुःखात्यन्तनिवृत्त्यै न प्रयासापेक्षा तत्त्वज्ञानादिसमर्जनविधिना । स्वत एव यदा मनुष्यः प्रैति, तदा तस्य भवति दुःखात्यन्तनिवृत्तिः । अत एवोक्तं षड्दर्शनसमुच्चये—

पिब खाद च जातशोभने यदतीतं वरगात्रि तन्न ते ।
नहि भीरु गतं निवर्त्तते समुदयमात्रमिदं कलेवरम्[2] ॥ इति ।

अन्यत्राप्युक्तम्—

यावज्जीवेत् सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः[3] ॥ इति ।

तस्मान्मरणमेवावश्यम्भावि[4] जीवस्यापवर्गो न तदन्यः कश्चनेति सिद्धम् । अत एव च बार्हस्पत्यं सूत्रम्—**'मरणमेवापवर्गः'**[5] इति । एतेन दार्शनिकान्तराणां **'परलोकप्राप्तिरेव मुक्तिः'**, **'स्वरूपप्रतिष्ठैव मुक्तिः'** इत्यादयो वादाः । एवंविधमुक्तिप्राप्त्यर्थं च जन्मजन्मान्तरायाससाध्यसाधनानुष्ठानादिप्रयासश्च निरर्थक एवेति चार्वाकसिद्धान्तनिष्कर्षः ।

**ईश्वरः**—परे हि दार्शनिकाः श्रुतिस्मृत्यादिप्रामाण्यग्राहिणो जीवात्मव्यतिरिक्तमेवेश्वरं ब्रह्मविष्णुशिवादिपदाभिधेयं प्रतिपन्नाः । तं च केचन **'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः'** इति **'मायोपहितं चैतन्यम्'** इति प्रकारेण निर्दिशन्ति । प्रयतन्ते चैवंविधमीश्वरं प्रमाणेन प्रसाधयितुमपि । परन्तु प्रयास एतेषां सर्वथा निष्फल एवेति चार्वाकाणां मतम् । नहि प्रत्यक्षातिरिक्तं किमपि प्रमाणमभिमतं चार्वाकाणामित्यवोचाम । तथा च प्रत्यक्षेणैवंविधपरप्रसिद्धेश्वरप्रमापणाभावाद् न कथमप्येवंप्रकार ईश्वरः स्वीकर्तुं प्रामाणिकानामुचित इति बार्हस्पत्यानुगतान

१. तत्त्वोपप्लवसिंहः, पृ० ४५; स० सि० सं० का० ८; प० पु०, सृ० ख० १३।३२३ ।
२. षड्दर्शनसमुच्चयः, का० ८२; ३. स० द० सं०; पृ० २ ।
४. सर्वसिद्धान्तसंग्रहः—लोकायतमतकारिके—९-१०; ५. तत्त्वोपप्लवसिंहः, पृ० ४५

चार्वाकाणां सिद्धान्तः[1]। एतेषां मते लोकप्रसिद्धो राजा परमेश्वरपदवीमधिरोहति[2], न ततोऽन्यः कश्चनाप्रामाणिकः।

न चेश्वरमन्तरा जगन्निर्माणासम्भावनापि शक्या निर्देष्टुम्, प्रलयानभ्युपगमेन[3] सर्वथा नूतनस्य जगतो निर्माणस्यानावश्यकत्वादसम्भवाच्च। अपि च पूर्येतैवंविधोऽपि मनोरथो वादिनां यदि कश्चन कार्यकारणभाव इष्टः स्यादस्माकं चार्वाकाणाम्, न चैतदस्ति, अकस्मादेव स्वभावादेव वा सर्वोत्पत्तिसम्भवे कार्यकारणभावस्य निर्मूलत्वादिति। अत एव गीतायाम्—

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम्[4]॥

इत्यादिना लोकायतिकदृष्टिरुद्दिष्टेति शङ्कराचार्या अपि प्राहुः। तस्मादेवमेवाकारणं सर्वमुपपद्यत इति चार्वाकमतनिष्कर्षः।

**अथ चार्वाकमतसमालोचनम्**

अत्र समालोचनप्रसङ्गे यद्यपि समालोचनीयाः सन्त्यनेके विषयाः, तथापि प्रतिपदं समालोचनाऽसम्भवादत्र मुख्याः सिद्धान्ता एव समालोच्यन्ते। प्रकृते च **'प्रत्यक्षमेवैकं प्रमाणम्', 'अकारणमेव जगत् प्रवाहानादि', 'देहात्मातिरिक्त आत्मा नास्ति'** इति त्रयश्चार्वाकसिद्धान्ताः प्रमुखत्वाद्विविच्यन्ते।

तत्र प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकमतं न समीचीनं प्रतिभाति। यदा पशवोऽपि व्यवहारेऽनुमानादीनां प्रामाण्यमभ्युपगच्छन्तो दृश्यन्ते, तदा कथमनुमानादीनां प्रामाण्यमुपेक्षितुं शक्यं केनापि विवेचकेन? अत्रार्थे भाष्यकृतां[5] वाचो विशेषेण निध्यातव्याः—**'नास्तिकस्तु पशोरपि पशुरिष्टानिष्टसाधनमविद्वान्। न खल्वस्मिन्ननुमानगोचरप्रवृत्तिनिवृत्तिगोचरे प्रत्यक्षं भवति। न च परप्रत्यायनाय शब्दं प्रयुञ्जीत, शब्दस्यार्थस्याप्रत्यक्षत्वात्। तदेवं मा नाम भून्नास्तिकस्य जन्मान्तरम्, अस्मिन्नेव जन्मन्युपस्थितोऽस्य महान्नरकः'**[6] इति एतावतेदं प्रतिफलति—यद् गवादयः पशवोऽपि प्रत्यक्षमनुमानं शब्दं च प्रमाणमभ्युपगच्छन्तीति। तथा हि—ते हरिततृणादिकं दृष्ट्वा प्रवर्तन्त इत्युपपन्नं प्रत्यक्षस्य प्रामाण्यम्। दण्डादिमन्तमसन्तं भयानकं पुमांसं सम्मुखमायान्तमवलोक्य **'अयं मां हन्तुमुद्यतः'** इत्यनुमिमानाः पलायन्त इत्यस्य प्रसिद्धत्वात् प्रतिपन्नमनुमानस्यापि प्रामाण्यम्। एवं प्रियं शब्दं शृण्वन्तः समीपमागच्छन्ति, अप्रियं च श्रुत्वा पलायन्त इत्यप्युपलभ्यत एवेति सिद्धं शब्दस्यापि प्रामाण्यम्। तदेवं त्रिप्रामाण्यवादिभ्यः पशुभ्योऽपि निकृष्टतराश्चार्वाका इति सूक्तम्—**'नास्तिकस्तु पशोरपि पशुः'** इति। अत एव

---

१. नास्ति सर्वज्ञः, प्रत्यक्षादिगोचरातिक्रान्तत्वात्—चार्वाकषष्टिः (परि०) क–७९।

२. स० द० सं०, पृ० ७; नै० च० १७।७६।    ३. न्यायरत्नावली, पृ० ११८।

४. गीता—१६।८। द्रष्टव्या—'शोणितशुक्रसम्भवः पुरुषो मातापितृनिमित्तकः' चार्वाकषष्टिः—परिशिष्ट—(क), ७८।

५. ब० सू० शा० भा० ४९ अच्युत ग्रन्थ माला द्वारा प्रकाशित।

६. भामती—३।३।५४।    ७. सां० त० कौ०—का० ५।

तत्त्वकौमुद्यामप्युक्तम्—'नानुमानं प्रमाणमिति वदता लोकायतिकेनाऽप्रतिपन्नः सन्दिग्धो विपर्यस्तो वा पुरुषः कथं प्रतिपद्येत ? न च पुरुषान्तरगता अज्ञानसन्देहविपर्यया: शक्या अर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुम् । नापि प्रमाणान्तरेण, अनभ्युपगमात् । अनवधृताज्ञानसंशयविपर्ययस्तु यं कञ्चन पुरुषं प्रति प्रवर्त्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत । तदनेनाज्ञानादयः परपुरुषवर्त्तिनोऽभिप्रायभेदाद्वचनभेदाद्वा लिङ्गादनुमातव्या इत्यकामेनाप्यनुमानं प्रमाणमभ्युपेयम्' इति ।

किञ्चानुमानादीनामप्रामाण्यावधारणमपि प्रत्यक्षमात्रप्रामाण्यवादिभिश्चार्वाकैर्न शक्यते कर्तुम् । प्रत्यक्षं हि लिङ्गादिरूपमात्रग्राहि, नाऽप्रामाण्यमेषां विनिश्चेतुमर्हति; नहि धूमज्ञानमिवैषामप्रामाण्यज्ञानमिन्द्रियार्थसन्निकर्षमात्रादुदेतुमर्हति, किन्तु देशकालावस्थारूपभेदेन व्यभिचारोत्प्रेक्षया । न चैतावान् प्रत्यक्षस्य व्यापारः सम्भवति । तस्मादप्यास्थेयं प्रामाण्यमनुमानादीनाम्[1] ।

यत्पुनरुक्तं तैरुपाध्यभावाज्ञानाद् व्याप्तिज्ञानाभाव इत्यप्रमाणमनुमानमिति, तदपि न शोभनम् । किं धूमाग्न्योः सम्बन्धे कश्चन योग्य उपाधिरयोग्यो वेति प्रदर्शयितुमशक्यं न तावद् योग्यः कश्चनोपाधिः शक्यः कल्पयितुम् । यत्पुनरयोग्योपाधिसंशयोद्भावनम्, तदपि न युक्तमेव, 'यदि धूमो वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यात्' इत्याकारककार्यकारणभावभङ्गप्रसङ्गात्मकेन तर्केण तादृशसंशयनिराससम्भवात् । तदेतदुदयनाचार्यैरपि—

शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः[2] ।। इति ।

यत्पुनरत्रार्थे खण्डनकारेणाक्षिप्तम् -

तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा ।
त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि ।।
व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ।।[3] इति ।

तदपि नोचितं प्रतिभाति । यत्र नियतान्वयव्यतिरेकानुविधायित्वज्ञानेन तादृशशङ्काया एवानुत्पत्तिस्तत्र खण्डनकाराक्षिप्तदोषप्रसरस्याभावादत एव तत्त्वचिन्तामणिकारेण तर्कप्रकरणे एतेन व्याघातो विरोधः । स च सहानवस्थाननियम इति तत्राप्यनवस्थेति निरस्तम्, स्वक्रियाया एव शङ्काप्रतिबन्धकत्वात्[4], इत्युक्तम् । तस्मादनुपपन्नं प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकावधारणम् ।

अकारणमेवेदं जगदिति पक्षोऽपि न क्षोदक्षमो विवेचकानाम् । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः[5] पृथिवी' इत्यादिभिः

---

१. भामती—३।३।५४; २. न्या० कु० ३।७; ३. ख० खा०, पृ० ३६४ ।
४. तत्त्वचिन्तामणेः तर्कप्रकरणे–३५; ५. तै० उ० २।१।१ ।

श्रुतिसहस्रैर्जगति सकारणकत्वव्यवस्थापनात् । प्रतिपादयिष्यते च श्रुतेः प्रामाण्यमपि स्वत एव । प्रतिनियतकार्योत्पत्त्यादियुक्तयश्चाकारणत्वप्रतिक्षेपका जाग्रत्येव । सर्वा हि ताः साधु सङ्कलिता उदयनाचार्येण कुसुमाञ्जलौ —

सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः ॥
हेतुभूतनिषेधो न स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैवमवधेर्नियतत्वतः[1] ॥

अत एवेश्वराङ्गीकारोऽप्येषां चार्वाकाणां न युक्तः, ईश्वराभावे संहन्तुरभावाद्भूत-चतुष्टयस्य[2] सङ्घातोऽपि नोपपद्येत । तथा च विशीर्णाः परमाणवस्त्र्यणुका एव वा प्रत्यक्षसिद्धा दोधूयमाना दृश्येरन्, न पुनर्घटपटादयोऽपि । तदेवं सति "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्[3]" इत्यादिना भगवद्गीतायामप्यनूदितमकारणमेवेदं जगदिति मतं प्रतिक्षिप्तमेव ।

सम्प्रति देहादीनामात्मत्वं चार्वाकैः प्रतिपन्नं विवेचनीयम् । तत्र न तावद्देह एवात्मा, प्रत्यक्षेणैवात्मनो देहव्यतिरिक्तत्वप्रतिपत्तेः । तथा हि—प्रत्यक्षमेवाहं प्रत्ययः शरीरातिरिक्त-मात्मानमवलम्बत इत्यन्वयव्यतिरेकाभ्यामवधार्यते । यदा खलु चैत्रो व्याघ्रमयीं व्यात्तविकट-दंष्ट्राकरालवदनामुत्तब्धबम्भ्रमन्मस्तकावचुम्बिलाङ्गूलाम् अतिरोषारुणध्वस्तविशालवृत्तलोचनां रोमाञ्चसञ्चयोत्फुल्लभीषणां स्फटिकाचलभित्तिप्रतिबिम्बितामभ्यमित्रीणां तनुमास्थाय स्वप्ने प्रतिबुद्धो मानुषीमात्मनस्तनुं पश्यति, तदोभयदेहानुगतमात्मानं प्रतिसन्दधानो देहातिरिक्तमात्मानं निश्चिनोति[4] । अत्रार्थेऽध्यासभाष्यभामतीग्रन्थोऽतिरोचकत्वादुद्ध्रियते—"स चायमाकीट-पतङ्गेभ्य आ च देवर्षिभ्यः प्राणभृन्मात्रस्येदङ्कारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेन 'अहम्' इत्यसन्दिग्धाऽविपर्यस्ताऽपरोक्षानुभवसिद्धः..........न च 'अहं कृशः स्थूलो गच्छामि' इत्यादिदेहधर्मसामानाधिकरण्यदर्शनाद् देहालम्बनोऽयमहङ्कार इति साम्प्रतम्, तदालम्बनत्वे हि 'योऽहं बाल्ये पितरावन्वभवं सोऽहं स्थाविरे प्रणप्तॄननुभवामि' इति प्रतिसन्धानं न भवेत् । न हि बालस्थविरयोः शरीरयोरस्ति मनागपि प्रत्यभिज्ञानगन्धो येनैकत्वमध्यवसीयेत । तस्माद्येषु व्यावर्त्तमानेषु यदनुवर्त्तते तत्तेभ्यो भिन्नम्, यथा कुसुमेभ्यः सूत्रम् । तथा च बालादिशरीरेषु व्यावर्त्तमानेष्वपि परस्परमहङ्कारास्पदमनुवर्त्तमानं तेभ्यो भिद्यते । अपि च स्वप्नान्ते दिव्यं शरीरभेदमास्थाय तदुचितान् भोगान् भुञ्जान एव बुद्धो मनुष्यशरीरमात्मानं पश्यन् 'नाहं देवो मनुष्य एव' इति देवशरीरे बाध्यमानेऽप्यहमास्पदमबाध्यमानं शरीराद् भिन्नं प्रतिपद्यते । अपि च योगव्याघ्रः शरीरभेदे अपि आत्मानमभिन्नमनुभवतीति नाहङ्कारालम्बनं देहः । अत एव नेन्द्रियाण्यप्यस्यालम्बनम्, इन्द्रियभेदेऽपि 'योहमद्राक्षं स एवैतर्हि स्पृशामि' इत्यहमालम्बनस्य प्रत्यभिज्ञानात् । "......बुद्धिमनसोश्च करणयोरहङ्कर्तेति कर्तृप्रतिभासप्रख्यानालम्बनत्वायोगः । कृशोऽहम्, अन्धोऽहम् इत्यादयश्च प्रयोगा असत्यप्यभेदे कथञ्चित् 'मञ्चाः क्रोशन्ति' इत्यादिव-

---

१. न्या० कु० १।४-५; २ सिद्धान्तबिन्दुः, श्लोकः १; ३. गीता—१६।८।
४. भामती—२।१।१४।

वोपचारिका इति युक्तमुत्पश्यामः। तस्माद् इदङ्कारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो व्यावृत्तः स्फुटतराहमनुभवगम्य आत्मा······इति सिद्धम्' इति।

यद्यप्यद्वैतिनोऽपि नाहमनुभवगम्यत्वमात्मनः प्रतिपद्यन्ते, तथापि व्यवहारदृष्ट्यापि देहादेरात्मत्वं नोपपद्यत इत्यर्थोऽयं भामतीग्रन्थ उपात्तः।

किञ्च चैतन्यादीनां भूतधर्मत्वमपि नोपपद्यते, भूतविशेषगुणानां रूपादीनां यावद्द्रव्यभावित्वेनायावद्द्रव्यभाविनां चैतन्यादीनां भूतधर्मत्वासम्भवात्। एतच्च विस्तरेण निरूपितम्—'व्यतिरेकस्तद्भावाभावित्वान्ननूपलब्धिवत्[1]' इति शारीरकसूत्रभाष्यभामतीतट्टीकोपटीकादिष्विति विरम्यते।

एवंविधैव युक्तिरन्यैरपि तान्त्रिकैरुपन्यस्ता चार्वाकमतनिराकरणाय। यथा कारिकावल्यां विश्वनाथभट्टाचार्यः—

शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः।
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः॥
मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्।[2] इति।

प्रशस्तपादेनाप्युक्तम्—'न शरीरस्य चैतन्यम्, घटादिवद्भूतकार्यत्वात्, मृते चासम्भवात्। नेन्द्रियाणाम्, करणत्वात्। उपहतेषु विषयासान्निध्ये चानुस्मृतिदर्शनात्। नापि मनसः, करणान्तरानपेक्षित्वे युगपदालोचनस्मृतिप्रसङ्गात्, स्वयं करणभावाच्च[3]' इति।

तदित्थं प्रतिफलितं यदयं पूर्वोपात्तश्चार्वाकपक्षो न विवेचकानां विचारसहः। प्रायेणैतदेव कारणं यदत्र भारते वर्षे चार्वाकस्यैकोऽपि सिद्धान्तग्रन्थो नाधुना लभ्यतेऽस्माभिः। तत्त्वोपप्लवसिंहे तु परपक्षनिरसनमात्रमेवेति।

● ● ●

---

१. ब्र० सू० ३।३।५४; २. कारिकावली–४८; ३. प्र० ध० सं०, पृ० ४९।

लघुग्रन्थमाला—३२

( अज्ञातकर्तृकः )

# शब्दप्रवृत्तिविचारः




सम्पादकः

डॉ० आद्याप्रसादमिश्रः

उपाचार्यः, व्याकरणविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वै० सं० २०३७

# विषयाऽनुक्रमणिका



• • •

# भूमिका

१८७७ वैक्रमाब्दे (१८२० खिष्टाब्दे) केनचिदज्ञातनामकेन विदुषा विरचितोऽयं लघुकायग्रन्थः। यद्यपि लेखकेनास्य नाम **'शब्दानां चतुष्टयी प्रवृत्तिः'** इति लिखितम्, किन्तु सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनपुस्तकालये (सं० ५।१८८) उपलब्धे ग्रन्थेऽस्य नाम सूचीकारेण विदुषा **'शब्दप्रवृत्तिविचारः'** इत्युल्लिखितम्। ग्रन्थमेनमवलोकनेनेदमपि नामकरणं समीचीनमेव प्रतीयते। ग्रन्थस्यास्य काचिदन्या प्रतिः क्वचिन्नैवोपलभ्यते।

लघुकायेऽप्यस्मिन् ग्रन्थे ग्रन्थकर्त्राऽतीव वैदुष्यपूर्णो युक्तियुक्तश्च विचार उद्गीरितः। ग्रन्थकारः कदा, कुत्र च जन्म लेभे इत्यादिजीवनेतिवृत्तविषयेऽपि कुतश्चित् किञ्चिन्नैव ज्ञायते। ग्रन्थकर्त्तुर्वैदुष्यविषये इदं सुस्पष्टं प्रतिभाति यद् महाभाष्य-वाक्यपदीयादिव्याकरणप्रमुखानां ग्रन्थानां प्रौढः पण्डितः सन्नप्ययं प्रमुखतो न्यायशास्त्रस्य पाण्डित्यं भजते स्म। प्रायो विचारवैमत्यप्रसङ्गे न्याय-मतमेव समर्थितम्।

ग्रन्थेऽस्मिन् **'चतुष्टयी शब्दानां प्रवृत्तिः'** इति महाभाष्यमधिकृत्य[1] जातिद्रव्य-गुणक्रियारूपाणामर्थानाञ्चातुर्विध्याच्छब्दोऽपि चतुर्विध इति निर्णीतम्। तत्र जाति-शब्देन जातिस्वरूपोऽखण्डोपाधिर्गृह्यते, न तु जातिरूपोऽर्थः। जातेरखण्डोपाधिरूप-स्वीकारादेवाभावत्वस्याप्यखण्डोपाधित्वान्नञ्पदाभावपदयोश्चतुर्वहिर्भावापत्तिरपास्तेति। तत्र जातौ शक्तौ सिद्धायामपि व्यवहारेण व्यक्तावेव शक्तिर्गृह्यते, न तु जातौ, तस्याः प्रवृत्त्याद्ययोग्यत्वेन तत्र शक्तिग्रहासम्भवात्।

ननु व्यवहारमहिम्ना व्यक्तावेव शक्तावङ्गीकृतायां गोपदादिवाच्या गोत्वादि-जातिः कथमिति चेत्, न, व्यक्तीनामानन्त्याद् व्यभिचाराच्च तत्र शक्तिग्रहस्यासम्भ-वात्, नानाशक्तिकल्पनस्य प्रसङ्गाच्च।

न चैवं गोपदादीनां यदि जातौ शक्तिरङ्गीक्रियेत, तदा गवि गोपदस्य शक्त्य-भावाद् गोव्यक्तेस्ततो बोधो दुर्लभ इति वाच्यम्, **'येन विना यदनुत्पन्नं तत्तेनाक्षिप्यते'** इति न्यायमहिम्ना निराश्रयाया गोत्वजातेरसम्भवतया गोव्यक्तिमन्तराऽनुपपत्त्या गोत्वजात्या गोव्यक्तेराक्षेपात्। अत एव वाक्यपदीये **'गौः स्वरूपेण न गौर्नाप्यगोर-भिधेयगोत्वाभिसम्बन्धाद् गौरित्यादिवाङ्मयेन जातावेव शक्तिः'** इति प्रपञ्चितम्।

गुणवाचकानां नीलादिशब्दानां नीलरूपादिगुणवाचकत्वमङ्गीकुर्वन्ति। न च नीलरूपादिनामानन्त्याद् नानात्वाच्चानन्त्यादिशेषस्य सम्भवे कथं तत्तद्गुणवाचकत्वं

---

१. महाभाष्यम् —

तेषामिति वाच्यम्, एकैकस्वरूपत्वेनाभिन्नतयाऽऽनन्त्यादिदोषाणामसम्भवात्। अतो नीलादिशब्दानां नीलरूपादिगुणवाचित्वं सुस्पष्टम्।

क्रिया नाम साध्यत्वेन प्रतीयमानो व्यापारः। साध्यत्वं तु—लिङ्गसंख्याऽन्वय-विरोधिकारकाकाङ्क्षाप्रयोजकः क्रियाधर्मः। स च धातुत्वेन सकलधातुवाच्यः। उक्तञ्च वाक्यपदीये—

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥[1]

क्रियायाः स्वरूपविषये महाभाष्येऽप्युक्तम् 'क्रिया नामेयमत्यन्तापरिदृष्टा अशक्या क्रिया पिण्डीभूता निदर्शयितुं यथा गर्भो निर्लुठितः। सासावनुमानगम्या। कोऽसावनुमानः? इह सर्वेषु साधनेषु सन्निहितेषु कदाचित् पचतीत्येतद् भवति, कदाचिन्न भवति। यस्मिन् साधने सन्निहिते पचतीत्येतद् भवति सा नूनं क्रिया[2]' इति।

परं क्रियायास्तथास्वरूपमवधारिते 'पश्य मृगो धावति' इत्यत्र धावनक्रियाया अतीन्द्रियतया दर्शनविषयत्वासम्भवेन मृगकर्तृकधावनं त्वत्कर्तृकदर्शनविषय इति भाष्याभ्युपेतः शाब्दबोधो न स्यात्। अत एव **नैयायिकाः** क्रियाया अतीन्द्रियत्वे नाङ्गीकुर्वन्ति।

**वैयाकरणास्तु** क्रमजन्मनां व्यापाराणां समूह एव क्रियेति मन्यन्ते, यथा चोक्तं हरिणा वाक्यपदीये—

गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्धया प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते॥[3] इति।

एवं डित्थादयो यदृच्छाशब्दा व्यक्तिमात्रवाचकाः। तत्र प्रयोक्तुः पुरुषस्येच्छैव नियामिका भवति। घटपटादिषु शब्देषु घटत्वपटत्वादिजातयः प्रवृत्तिनिवृत्ति-नियामिका भवन्ति, किन्तु डित्थादिषु शब्देषु तादृशी स्थितिर्नास्ति। अत एव यदृच्छाशब्दानां व्यक्तिमात्रवाचकत्वमप्युक्तं तत्र तत्र।

शाब्दिकानां रीत्या द्विधा हि द्रव्यत्वम्। एकं हि **'सर्वनामपरामर्शयोग्यत्वं द्रव्यत्वम्'** अर्थाद् यो ह्यर्थो यत्तदादिसर्वनामभिर्बोध्यते, तद् द्रव्यम्। यथा **'घटोऽस्ति तमानय'** अत्र घटो द्रव्यम्। अपरं द्रव्यपदेन यो यः शब्देनोच्यते विशेष्यतया स सर्वोऽपि द्रव्यधर्मयुक्तो गृह्यते। तद्यथा—**'घटत्वमस्ति तत् पश्य'** इत्यत्र घटत्वं द्रव्यम्। शुक्लो गुणोऽपि द्रव्यम्। 'क्रिया अस्ति' अत्र क्रिया द्रव्यम्। एवं जात्यादेरपि विशेष्यत्वविवक्षायां द्रव्यत्वमेव। भर्तृहरिणाऽप्युक्तम्—

वस्तूपलक्षणं यत्र सर्वनामप्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥[4] इति।

---

१. वाक्यपदीयम्—३।८।१। २. महाभाष्यम्—१।३।१।
३. वाक्यपदीयम्—३।८।४। ४. तदेव—३।४।३।

अत्र निबन्धे नैयायिकरीत्या प्रथमान्तार्थमुख्यविशेष्यक एव शाब्दबोधोऽङ्गीक्रियते, न तु क्रियाविशेष्यको बोधः। यद्यपि 'चैत्रेण सुप्यते' इत्यादौ प्रथमान्तार्थाभावान्नैयायिकैरपि क्रियाविशेष्यक एव बोधोऽङ्गीक्रियते, परं **'त्रयः कालाः'** इत्यत्र क्रियाया अभावाद् वैयाकरणैरपि प्रथमान्तार्थप्रधानकबोध एवाऽभ्युपेयो भवति।

न चैवं क्रियाप्रधानकबोधस्वीकारेऽपि दोषाभावात् प्रथमान्तार्थप्रधानकः, क्रियाप्रधानको वा बोध इत्यत्र विनिगमकाभाव इति चेत्, न, सर्वनाम्नां प्रधानपरामर्शित्वनियमात्। **'पश्यति पुरुषस्तस्य पादयोरभिवादय'** इत्यत्र तच्छब्देन पुरुषपरामर्शाय पुरुषप्रधानकबोधस्यैव स्वीकर्त्तव्यतया प्रथमान्तार्थप्रधानकबोधे तस्य विनिगमकत्वसम्भवात्।

प्रथमान्तार्थप्रधानकबोधस्वीकारे **'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि'** इति निरुक्तवचनविरोधस्तु न शङ्क्यः, 'भावप्रधानमाख्यातम्' इत्यस्याख्यातार्थेषु तेषु भावोऽर्थात् कृतिः प्रधानमित्यर्थात्। तेन तादृशनिरुक्तवचनेन शाब्दबोधे क्रियाप्रधानको बोधो भवतीत्यर्थस्यासम्भवात्।

ननु नैयायिकरीत्या प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्वीकारे पश्य मृगो धावतीत्यत्र धावनकर्तृकमृगस्यैव कर्मतया दर्शनेऽन्वयोऽभ्युपेतव्यः, तेन मृगपदात् **'कर्मणि द्वितीया'** इत्यनेन द्वितीयाया आपत्तिः। क्रियायाः प्राधान्यमङ्गीकृतायां मृगकर्तृकधावनस्यैव कर्मतयाऽन्वय इति धातोः पर्युदासेन प्रातिपदिकसंज्ञा विरहाद् न द्वितीया इति चेत्, न 'धावति मृगः' इति वाक्यार्थस्य धावनकर्तृत्वविशिष्टमृगस्य कर्मतया दर्शनेऽन्वयस्वीकारेण 'धावति मृगः' इति वाक्यस्य वृत्त्याऽर्थप्रतिपादकत्वरूपार्थवत्त्वाभावात् **'कृत्तद्धितसमासाश्च'** इत्यनेन समासग्रहणस्य नियमार्थत्वाच्च द्वितीयाया अप्रसङ्गेनादोषात्। इत्थं हि नैयायिकरीत्या प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्वीकारेऽपि न कश्चन दोषलेश इति ग्रन्थकर्त्तुराशय इति।

काश्याम्
गङ्गादशहरा
वै० स० २०३७
दि०..................

डॉ० आद्याप्रसादमिश्रः
उपाचार्यः—व्याकरणविभागे
स० सं० वि० विद्यालयस्य

अज्ञातकर्तृकः

# शब्दप्रवृत्तिविचारः

शब्दानां चतुष्टयी प्रवृत्तिरिति महाभाष्यम्, प्रवृत्तिः प्रतिपादयता तत्प्रयोजिका शक्तिरिति यावत्। तथा च—जातिगुणक्रियाद्रव्यरूपार्थचातुर्विध्याच्छब्दोऽपि चतुर्विध इति पर्यवसितम्। तथा चोक्तम्—

शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः।
चातुर्विध्यादमीषां तु शब्द उक्तश्चतुर्विधः॥ इति।

तत्र जातिशब्देनाखण्डधर्म उच्यते, न तु नित्यानेकसमवेतम्, अन्यथा जातिशब्दस्यैव तु बहिर्भावापत्तिः स्यात्। न हि जातिशब्दस्य जातिरर्थः, किन्तु जातित्वरूपाखण्डोपाधिरेव।

न च जातिपदस्य जातौ शक्तिस्वीकारेणैव गोशब्दादेरिव जातिवाचकान्तर्गतसम्भवात् किं जातिपदस्याखण्डधर्मपरतयेति वाच्यम्, गोपदादेर्व्यक्ताविव जातिपदस्याप्यानन्त्यादिदोषसम्भवेन शक्त्यसम्भवात्।

एवञ्च नञ्पदाभावपदयोरपि चतुर्बहिर्भावापत्तिरपास्ता। नञ्पदाभावपदयोरभावार्थकत्वेनाभावत्वस्याखण्डोपाधित्वात्—जातिवाचकशब्दान्तर्गतत्वसम्भवात्।

अथ व्यवहारेण व्यक्तावेव शक्तिर्गृह्यते, न तु जातौ, तस्याः प्रवृत्त्याद्ययोग्यत्वेन तत्र शक्तिग्रहासम्भवात्। एवं गोत्वादिजातिः कथं गोपदादिवाच्येति चेत्, न, व्यक्तीनामानन्त्येन तत्र शक्तिग्रहासम्भवात्, नानाशक्तिकल्पनप्रसङ्गाच्च, व्यक्तेर्गोपदबोधस्तु गोत्वशक्त्याक्षेपवशात्। न च किमानन्त्येन, तत्तद्व्यक्तिविषयशक्तिज्ञानस्य। तत्तद्विषयकशाब्दबोधे हेतुत्वस्वीकारेण यस्या व्यक्तेः शाब्दबोधस्तत्र शक्तिग्रहो वर्तत एवेति वाच्यम्, काश्यां गौरस्तीत्यत्र मिथिलस्थायां गवि शक्तिग्रहात्, काशीस्थाया गोर्मैथिलत्वेन शाब्दबोधव्यभिचारात्। एवञ्च गोत्वादिजातिरेव गोपदादिवाच्येति। तथा चोक्तं वाक्यपदीये[1]—'गौः स्वरूपेण न गौर्नाप्यगौरभिधेयः, गोत्वाभिसम्बन्धाद् गौरिति स्वरूपेणानारोपेण न गौः, न गोपदाभिधेयो नाप्यगौः, न गोभिन्नाश्वादिपदाभिधेयः, किन्त्वभिधेयगोत्वाभिसम्बन्धोपाधिकगोपदाभिधेयतावानिति तस्यार्थः।

एवं नीलरूपादौ नीलादिपदानां शक्तिः, नीलादिशब्दा गुणवाचिनो नीलरूपादौ नीलादिपदानां शक्तिः। न चात्रापि नीलरूपस्य नानात्वानन्त्यादिदोषसम्भव इति वाच्यम्, नीलरूपस्य नित्यैकस्वरूपत्वेनानन्त्यादिदोषासम्भवात्।

न च नीलरूपस्य नित्यत्वे नीलो ध्वस्त इति सर्वजनप्रत्ययो न स्यादिति वाच्यम्, तादृशप्रतीत्या नीलसमवायस्यैव ध्वस्तत्वावगमेनादोषात्। एवञ्च नीलादयः

१. वाक्यपदीयम्—३।८।१।

शब्दा नीलरूपादिवाचका नीलरूपाद्याश्रिता व्यक्तिमाक्षिप्यानुभावयन्तीति निगर्वः। एवं पचादिधातवः क्रियावाचकाः। क्रिया तु—साध्यत्वेन प्रतीयमानो व्यापारः। साध्यत्वं तु लिङ्गसंख्यान्वयविरोधिकारकाकाङ्क्षाप्रयोजकः क्रियाधर्मः। स च धातुसामान्येन क्रियायां चोच्यते। तदाहुः—

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते[1] ॥ इति।

न च व्यापाररूपायाः क्रियायाः पच्यादिपदार्थत्वे व्यक्त्यानन्त्यादिदोषतादवस्थ्यमिति वाच्यम्, क्रियायाः सकलफलानुकूलव्यापारानुगतस्यैकस्या एव साध्यत्वेन पच्यादिनाभिधानात् तस्याः क्रियाया व्यक्तिस्थलीयावयवा अधिश्रयणादयःपौर्वापर्यमासादयन्ति, न तु क्रियायास्तस्या एकत्वात्। अतीन्द्रियत्वेन पौर्व्यगोचरप्रत्यक्षासम्भवाच्च।

तथा च भाष्यम्–"क्रिया नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा पिण्डीभूता न निदर्शयितुं शक्येति। एवं डित्थादयः शब्दाः स्फोटात्मकस्वरूपवाचकाः। ये तु परिभाषात्मकस्वतन्त्रेच्छासंसर्गेण स्फोटाश्रितां डित्थादिव्यक्तिमाक्षिप्यानुभावयन्ति स्फोटस्य शब्दात्मकत्वेन शब्दस्य द्रव्यत्वात् संज्ञाशब्दानां द्रव्यवाचितापवादः। एवं चार्थचातुर्विध्याच्छब्दानामपि चातुर्विध्यं निष्प्रत्यूहम्।

अत्रेदं विचार्यते गोत्वविशिष्टायां गव्येव गोव्यवहारादभिधा गृह्यते, न तु गोत्वे, तस्य प्रवृत्त्याद्ययोग्यत्वात्।

न च व्यवहाराद् व्यक्तेः पदबोध्यत्वमेवायति। तच्च जातिशक्त्याक्षेपवशादपि सम्भवति, किमानन्त्यादिदोषनिकरकवलितव्यक्तिशक्त्येति वाच्यम्, गोत्वादौ गोपदादेः शक्त्यसम्भवात्। तथा सति गोत्वत्वावच्छेदेन गोपदेऽभिधाग्रहस्य गौरिति स्मरणं प्रति हेतुत्वे क्वचिद् गौरिति, क्वचिद् गोत्ववानिति वैचित्र्यानुपपत्तेः। व्यक्तिशक्तिरिति वादे तु स्वरूपतो गोत्वादिप्रकारकशक्तिज्ञानस्य गौरिति स्मरणे गोत्वत्वविशिष्टगोत्वप्रकारकशक्तिज्ञानस्य गोत्ववानिति स्मरणे हेतुत्वसम्भवेन तादृशस्मरणयोर्वैचित्र्यसम्भवात्। न च गोपदधर्मिकगोत्ववाचकताज्ञानमेव स्मारकम्। एवञ्चानवच्छिन्नस्य गोत्वस्य प्रकारकत्वे गौरिति गोत्वत्वविशिष्टस्य प्रकारकत्वे गोत्ववानिति स्मरणमुपपद्यत इति वाच्यम्, पारतन्त्र्येणैकगोत्वादेरितरतामवच्छिन्नप्रकारकत्वस्वीकारे वाचकताग्रहे गोत्वादेरनवच्छिन्नप्रकारतासम्भवात्, अन्यथा कालो गौरिति प्रत्यक्षप्रसङ्गात्।

अथ वैयाकरणानां मतेऽयं घट इति व्यवसायस्य घटत्वेनामुं जानामीत्यनुव्यवसायस्वीकारेण तत्र स्वरूपतो घटादेर्भानसम्भवात्। एवं वाचकताज्ञाने स्वरूपतो गोत्वादेर्ज्ञानं सम्भवत्येवेति चेत्, अस्तु, तथापि जातौ शक्तिस्वीकारे व्यक्तेर्भानासम्भवात्। न चाक्षेपादेव व्यक्तिर्भासत इत्युक्तमिति वाच्यम्, आक्षेपस्य निर्वक्तुमशक्यत्वात्। न च तुल्यवित्तिवेद्यत्वमेवाक्षेपपदार्थस्तदपि जातिर्व्यक्तिं विना न भासत इति जाति-

1. वाक्यपदीयम्—३।८।१।

वाचकसामग्रीतयैव व्यक्तेर्भानम्, तथा च जातिप्रकारताया व्यक्तिविशेष्यतानिरूपितत्व-नियमात्। जातिशक्त्या जातिप्रकारकज्ञाने जायमानेऽर्थसिद्धव्यक्तिविशेष्यताकत्वस्य सम्भवादिति वाच्यम्, गोत्वप्रकारकज्ञानवानहमित्यनुव्यवसाये गोत्वप्रकारकत्वस्य सत्त्वेन गोविषयताकत्वस्यासत्त्वेन च व्यभिचाराद् गोत्वप्रकारताया गोविशेष्यतानिरू-पितत्वनियमासम्भवेनोक्ततुल्यवित्तिवेद्यत्वरूपाक्षेपासम्भवात्।

न च समवायेन गोत्वप्रकारताया एव व्यक्तिविशेष्यतानिरूपितत्वनियमः, अनुव्यवसायेन प्रकारताया एव व्यक्तिविशेष्यतानिरूपितत्वानियमः। अनुव्यवसाये तु प्रकारतासंसर्गेण गोत्वस्य ज्ञानप्रकारकत्वान्न व्यभिचार इति वाच्यम्, गवयेऽपि गोत्व-भ्रमसम्भवात् तत्र व्यभिचारस्य केनाप्यशक्यपरिहारत्वात्। एवञ्च जातौ शक्तिस्वीकारे गवादिव्यक्तेः शाब्दज्ञाने भानासम्भवेन गवादिव्यक्तावेव गवादिपदानां शक्तिरावश्यकी। न च मिथिलस्थायां गवि शक्तिग्रहात् काशीस्थाया गोर्भानासम्भव इति पूर्वोक्तदूषण-मिति वाच्यम्, गोत्वविशिष्टविषयकशाब्दबोधे गोत्वप्रकारकशक्तिज्ञानस्य कारणत्व-स्वीकारेणागृहीतशक्तिकाया गोर्भानसम्भवेनोक्तदोषासम्भवात्। तथा चोक्तम्—

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति॥ इति।

एवं नीलरूपव्यक्तय एकैका नीलादिशब्दवाच्या इत्यप्ययुक्तमेव, नीलतरत्वनील-तमत्वरूपवैलक्षण्यानुभवसिद्धत्वेन नीलरूपस्य नानात्वात्। किञ्च नीलो ध्वस्त इत्यादि-प्रतीत्या नीलरूपस्यै (व) ध्वंसप्रतियोगित्वावगाहनेनानित्यत्वासम्भवः।

न च तादृशप्रतीत्या नीलरूपसमवायस्यैतद्ध्वंसत्वमवगाह्यत इत्युक्तमिति वाच्यम्, नीलरूपसमवायस्य प्रतियोगित्वेनानुल्लेखात्। अन्यथा घटो ध्वस्त इति प्रतीत्याऽपि घटसमवायस्यैव ध्वस्तमवगाह्यत इत्यस्यापि वक्तुं शक्यतया घटादीनां नित्यत्वप्रसङ्गात्। तस्मान्नीलादिध्वंसादेरनुभवसिद्धतया दुरुपद्रवत्वादनित्यानेका एव नीलरूपादिव्यक्तय इति।

एवं पच्यादिधातुना रूपादिपरावृत्तिजनकानलसंयोगादिरूपव्यापार एवोप-स्थाप्यते, न तु सकलव्यापारानुगतैकातीन्द्रियरूपा क्रिया, तस्याः प्रमाणाभावेना-सिद्धतया धातुनोपस्थित्यसम्भवात्।

न च क्रिया नाम अत्यन्तापरिदृष्टा पूर्वापरीभूताऽनवयवपिण्डीभूता न निदर्शयितुं शक्येति भाष्यादेव तादृशक्रियासिद्धिरिति वाच्यम्, भाष्यकारस्य स्वतन्त्रेच्छायत्तया नियन्तुमशक्यत्वेन तद्वचनस्यार्थसाधकत्वाभावात्। लोकदृष्टव्यवहारेणैव पचत्यादिव्यव-हारोपपत्तौ तादृशातीन्द्रियक्रियायां मानाभावाच्च। अत एव पश्य मृगो धावतीत्यत्र मृगकर्तृकधावनं त्वत्कर्तृकदर्शनविषय इति शाब्दबोधो भाष्याभ्युपेतः सङ्गच्छेत। अन्यथा धावनक्रियाया [अक्रियायाः] अतीन्द्रियतया दर्शनविषयत्वासम्भवेन तादृश-बोधो न स्यात्।

न च क्रियाया अतीन्द्रियत्वेऽपि तदवयवीभूतव्यापारस्य दृश्यत्वेन तत्र दर्शनान्वय इति वाच्यम्, अवयविनोऽतीन्द्रियत्वेऽवयवदृश्यत्वस्यादृष्टचरत्वेनासम्भवात्।

किञ्च, नित्या अतीन्द्रियरूपा क्रिया द्रव्यरूपा तदन्यरूपा वा आद्ये नित्यद्रव्यस्यावयवासिद्धिः। अन्त्ये गुणादीनामवयवस्य केनाप्यनङ्गीकारात्। तस्माद् रूपपरावृत्तिजनकानलसंयोगादिव्यापार एव पच्याद्यर्थं इति।

एवं स्फोटोऽपि न डित्थादिपदवाच्यः, डित्थादिव्यक्तेरभानापत्तेः। आक्षेपाद् व्यक्तेर्भानमित्यस्य जातिशक्तिनिराकरणावसरे निरस्तत्वात्। किञ्च स्फोट एव मानाभावः।

न च नदी-दीनपदयोर्वर्णसमुदायस्याविशेषादविशेषेण बोधापत्तिः, स्फोटस्वीकारे तु नदी-दीनपदयोर्भिन्नस्फोटसत्त्वादर्थबोधवैचित्र्यमुपपद्यत इति वाच्यम्, आनुपूर्वीविशिष्टशब्दस्यैवार्थबोधकतया पौर्वापर्यरूपानुपूर्वीणां भिन्नत्वादर्थविशेषबोधसम्भवात्। आनुपूर्वीणां स्फोटाद्यभिव्यञ्जकत्वस्य त्वयापि स्वीकरणीयतया तदेतयोरेवास्तु, किं तेनेति न्यायानुपूर्वीज्ञानस्य हेतुत्वौचित्याच्च। तस्मात् संज्ञाशब्दानामपि व्यक्तिरेव वाच्येति।

ननु घटो भविष्यतीति वाक्यात् प्रथमान्तार्थमुख्यविशेष्यकबोधसमर्थनमिदं वाक्यमिति सन्धानो मुख्यविशेष्यं प्रथमान्तार्थं प्रत्येति क्रियाविशेष्यकबोधसमर्थनमिदं वाक्यमिति यः प्रतिसन्धत्ते, स प्रधानीभूतक्रियामेव गच्छतीति सिद्धान्तः।

अत्र **वैयाकरणाः** सर्वत्र क्रियाया एव प्राधान्यम्, न तु प्रथमान्तार्थो मुख्यविशेष्यः। वैपरीत्ये तु **'चैत्रेण सुप्यते'** इत्यादौ क्रियायाः प्राधान्यस्य भवदभ्युपगतस्य विनिगमकस्य सत्त्वात्। मम तु नैकत्रापि प्रथमान्तार्थप्रधानतापदारोधेनान्यत्रापि तत्स्यादिति चेत्, त्रयः काला इत्यत्र भवतोऽपि प्रथमान्तार्थस्यैव मुख्यविशेष्यत्वात्। तत्र क्रियासमभिव्याहाराभावेन क्रियायाः प्राधान्याभावाद् भवन्तीत्यध्याहारस्य भूतत्वविरहाद् भविष्यन्तीत्यध्याहारस्य वर्तमानत्वविरहात्, अभूवनित्यध्यहारस्य चासम्भवात्। सन्तीति नाध्याहारस्त्रयाणां कालानामविद्यमानत्वात्।

न चाध्याहारोऽपि 'ईश्वरेण ज्ञायन्ते' इत्यस्य त्रयाणां कालानां ज्ञानविषयत्वे बाधकाभावात्, अस्ति भवतीति विरोधादिति वाच्यम्, अध्याहारश्चेद्, भूधातोरस्धातोरेव, नान्यस्येति नियमात्। स्याद् वा कात्यायनविरुद्धानामप्यध्याहारः। ममापि चैत्रेण सुप्यते इत्यत्र इतीश्वरो जानातीत्यस्याध्याहारः।

अथ **नैयायिकमते** चैत्रः पचतीत्यादौ पाकानुकूलकृतिमाँश्चैत्र इत्याकारकबोधो न सङ्गच्छते। **'भावप्रधानमाख्यातम्'**[1] इति निरुक्तस्मृतेर्विरोधात् तादृशस्मृत्यभावस्य क्रियायाः प्राधान्यमभिधीयत इति क्रियाप्रधानकबोध एव समुचित इति चेत्, न, भावप्रधानमाख्यातमिति निरुक्तस्मृतेराख्यातार्थेषु भावनायाः कृतेः प्राधान्यमित्यर्थाद् भावपदेन भावनाया अभिधानात्। तथा च निरुक्तस्मृतिराख्यातार्थेषु तेषु कृतिरूपाया भावनाया प्राधान्यमभिधत्ते, न क्रियाप्राधान्यमिति।

ननु तथापि पश्य मृगो धावतीत्यत्र प्रथमान्तार्थप्राधान्यस्वीकर्तॄणां मते धावनकर्तृमृगस्यैव विषयतारूपकर्मताया दर्शनेऽन्वय एवाभ्युपेतव्यः। एवञ्च मृगपदात् कर्मणि

---

१. निरुक्तम्—१।१।

द्वितीया स्यादिति क्रियाप्राधान्यवादिनां मते मृगकर्तृकधावनस्यैव कर्मतयाऽन्वय इति धातोः पर्युदासेन प्रातिपदिकसंज्ञाविरहान्न द्वितीयाप्रसङ्ग इति चेत्, मैवम्, मृगपदार्थस्य कर्मतया दर्शनेऽन्वयाभ्युपगम एवेदं दूषणं तदेव न, किन्तु धावति मृग इति वाक्यार्थस्य धावनकर्तृत्वविशिष्टमृगत्वावच्छिन्नस्य ताद्दशविशिष्टधर्मावच्छिन्नविषयतारूपकर्मता-संसर्गेण दर्शनेऽन्वयस्वीकारेण धावति मृग इति वाक्यस्य वृत्त्याऽर्थप्रतिपादकत्व-रूपार्थत्वाभावात् कृत्तद्धितसमासाश्चेत्यनुशासने समासग्रहणस्य नियमार्थत्वाच्च प्राति-पदिकसंज्ञाया अप्रसाराच्च न ताद्दशवाक्याद् द्वितीयाप्रसङ्गः। अत एव 'मलिनं ते वपुः स्नायात्' इत्यत्र मालिन्यविशिष्टवपुषो विशेषणोपसङ्क्रान्तहेतुहेतुमद्भावसंसर्गेणैवा-शंसाविषयेऽन्वयः। सिद्धसाध्यसमाहारे 'सिद्धं साध्याय कल्पते' इति न्यायात्। तथा चात्र हेतौ पञ्चमीति निरस्तम्, वाक्यार्थस्यैव हेतुहेतुमद्भावेनान्वयाद्वाक्यस्य प्राति-पदिकसंज्ञाविरहात्।

एवम्—

देवाकर्णय संग्रामे चापेनासंहिताः शराः।
पश्य लक्ष्मण पम्पायां वकः परमधार्मिकः॥

इत्यादावपि सङ्ग्रामाधिकरणकचापकर्तृकसादनकर्मत्वविशिष्टशरत्वावच्छिन्नस्य ताद्दश-विशिष्टधर्मावच्छिन्नकर्मतासंसर्गेण सम्बोध्यकाशंसाविषयः कर्णनक्रियायां परमधार्मि-कत्वविशिष्टवकत्वावच्छिन्नस्य ताद्दशधर्मावच्छिन्नकर्मतासंसर्गेण संबोध्य पम्पाधिक-रणकाशंसाविषयदर्शनक्रियायां चान्वयस्वीकारेणैव न द्वितीयाप्रसङ्गः। ताद्दशविशिष्ट-धर्मावच्छिन्नयोर्वाक्यार्थत्वेन वाक्यस्य प्रातिपदिकसंज्ञाविरहात्। एवञ्च प्रथमान्तार्थ-प्रधानकशाब्दबोधस्वीकारान्नानुपपत्तिलेशोऽपि।

ननु क्रियाप्रधानकशाब्दबोधस्वीकारेऽप्यनुपपत्त्यभावात् प्रथमान्तार्थप्रधानकः क्रियाप्रधानको वा बोध इत्यत्र विनिगमकाभाव इति चेत्, न, क्रियाप्रधानबोधस्वीकारे **'प्रयाति पुरुषस्तस्य पादयोरभिवादय'** इत्यत्र तच्छब्देन पुरुषो न परामृश्येत्, तस्य प्राधान्याभावात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वनियमात्। अन्यथा **'दृश्यन्ते राजमातङ्गास्तस्यैवामी तुरङ्गमा'** इत्यादिप्रयोगप्रसङ्गात्। अप्रधानस्यापि राज्ञ-स्तच्छब्देन परामर्शसम्भवेन, ताद्दशावाक्याद् भ्रमात्मकबोधकाभावात्। तच्छब्दस्य प्रधानपरामर्शित्वस्वीकारे तु राज्ञः प्राधान्याभावेन तच्छब्देन न परामर्शः, किन्तु मातङ्गानामेव, तेषां तुरङ्गमे स्वस्वामिभावरूपषष्ठ्यर्थाभावान्नान्वयः। एवञ्चोक्तस्थले तच्छब्देन पुरुषपरामर्शाय तत्प्रधानकबोधस्यैवाभ्युपगमात् प्रथमान्तार्थप्रधानकबोधे तस्यैव विनिगमकत्वसम्भवात्। न च ताद्दशनियमस्वीकारे—

पटोलपत्रं शीतघ्नं तस्य मूलं कफावहम्।
एवं शोभनां गञ्जनां पिब॥

एवमप एव ससर्ज्जादौ तासु वीर्यमवाकिरदित्यादौ वाक्यार्थबोधानुपपत्तिस्तत्र पटोलमूलादीनां तत्पदेन परामर्शासम्भवादिति वाच्यम्, पदवृत्तिग्रहमुख्यस्य, प्रधान-पदार्थत्वादिति सङ्क्षेपः।

पश्य मृगो धावतीत्यत्र क्रियायाः प्राधान्यस्वीकाराद् दृशि क्रियायां धावनक्रियायाः कर्मतासंसर्गेणान्वयश्चेत्तर्हि एकक्रियाविशेष्यकापरक्रियाप्रकारकबोधेच्छयोच्चरितवाक्यमपि साध्वेव, भाष्यप्रयोगादेव साधुत्वम्। अत एव 'तिङ्ङतिङः'[1] इति सूत्रेऽतिङन्तात्परं तिङन्तं निहन्यत इत्यर्थात् तिङन्तात् परतिङन्तस्य निघातस्वरवारणायातिङ् इति सार्थकं तदैव स्याद्, यदि तिङन्तात् परं तिङन्तं सविपेक्षं स्यात्, समर्थाश्रितत्वात् पदविधेयः। तस्मात् पचति भवतीति निर्देशेन तयोः परस्परसव्यपक्षताऽभ्युपगमकेन भवतीत्यस्य निघातस्वरवारणाय सार्थकत्वम्। तदसार्थकत्वे तदनुपकारेण गच्छति भवतीत्याधुनिकस्यासाधुत्वं तथाऽनिर्देशात्। लौकिकवाक्ये क्रियाया क्रियाकर्मभावेनान्वयबोधानभ्युपगमात्। अन्यथा पचति भवतीतिवत् पवते [पविते] भूयात् चन्दनं सुस्यमेने सुखयतीतिवच्चन्दनं सयुनसंयुनक्ति सुखयति वा सायं गच्छति दीपं पश्यतीति तन्तुनाशात् तन्तुर्नश्यति पलोलं पश्यतीति स्पन्दसंयोग इतिवत् स्पन्दते घनरतिसंयोगनाश इतिवद् न पश्यतीति विभागे सति संयोगनाश इतिवत् संयुनक्ति, न पश्यतीति स्यात्। न हि महाकरप्रतीतवाक्यविसदृशानामपि साधुतानां कश्चित् प्रामाण्यमभ्युपैति, न्यायनये क्रिययोः परस्परमन्वयबोधविरहेणाप्रामाण्यमभ्युपगमादिति कृतं पल्लवितेन।

संवत् १८७७ मोती फाल्गुनवदो १३, वार शुक्रवार।

• • •

---

१. अष्टाध्यायी—८।१।२८।

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति ।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये ।

७. 'कुलसचिव, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी-२२१००२ (उ०प्र०) इति सङ्केतेन ('बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम् ।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी–२२१००२ (उ० प्र०)" इति सङ्केतेन विधेयः ।



प्रकाशकः–निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी-२२१००२ (उ० प्र०) ।
मुद्रकः–तारा प्रिंटिंग वर्क्स, कमच्छा, वाराणसी ।

रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

# विज्ञप्ति

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | प्रकाशक का नाम | भागीरथप्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ४. | सम्पादक का नाम | भागीरथ प्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५. | मुद्रक का नाम | श्री रमाशंकरपंड्या |
| | राष्ट्रियता | भारतीय |
| | पता | तारा प्रिंटिंग वर्क्स, कमच्छा, वाराणसी |
| ६. | स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |

मैं भागीरथप्रसाद त्रिपाठी घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
भागीरथप्रसाद त्रिपाठी
अनुसन्धानसंस्थाननिदेशकः
सं० सं० वि० वि०, वाराणसी—२२१००२.

# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

## अभिनवप्रकाशनानि

ग्रन्थनाम — मूल्यम्

१. योगिनीहृदयम्—[ तन्त्रशास्त्रम् ] तृतीयं संस्करणम्। तन्त्रशास्त्रीयोऽयं ग्रन्थोऽम्बिकानन्दयोगिकृतदीपिकाख्यया भास्कररायकृतसेतुबन्धाख्यया च टीकया समलङ्कृत्य प्रकाशितः— ३३-४०

२. तत्त्वचिन्तामणिः—अनुमानखण्डात्मकः [ न्यायदर्शनम् ] ग्रन्थरत्नमिदं श्रीयज्ञपति-उपाध्यायकृतया 'प्रभाख्यया' व्याख्यया तथा च विद्वन्मूर्धन्येन न्यायशास्त्रस्य स्वतःप्रमाणभूतेन कुलपतिवरेण आचार्यबदरीनाथशुक्लमहोदयेन च विशिष्टैः टिप्पण-भूमिकापरिशिष्टादिभिः सम्पाद्य प्रकाश्यते—

३. यन्त्रराजविचारविंशाध्यायी [ ज्योतिषशास्त्रम् ] आचार्यनयनसुखोपाध्याय-विरचितेऽस्मिन् ग्रन्थे ज्योतिषशास्त्रीयोपयोगिनां वेधादियन्त्राणां सैद्धान्तिकं प्रायोगिकञ्च समालोचनमत्र विहितम्— ११-००

४. भारतीयविचारदर्शनम्—द्वितीयो भागः [ आचारशास्त्रम् ] ग्रन्थेऽस्मिन् लेखकेन डॉ० हरिहरनाथत्रिपाठिना भारतीयविचाराचाणाम् ऐतिहासिकं तुला-बोधकञ्च विवेचनं कृतम्— १०५-६०

५. पालितिपिटकसद्दानुक्कमणिका—[कोशः] पालित्रिपिटकान्तर्गतानां शब्दानां सान्दर्भिकः समावेशोऽत्र द्रष्टुं शक्यते— १००-६०

६. पुराणेतिहासयोः सांख्ययोगदर्शनविमर्शः [ दर्शनशास्त्रम् ] अनुसन्धान-प्रबन्धेऽस्मिन् लेखकेन सम्पादकेन च डॉ० श्रीकृष्णमणित्रिपाठिना महता प्रयासेन पौराणिका महाभारतीयाश्च सांख्य-योगपदार्थाः विवेचिताः— ३२-८०

७. वैशेषिकसिद्धान्तानां गणितीयपद्धत्या विमर्शः [ गणितशास्त्रम् ] गवेषणा-प्रबन्धेऽस्मिन् वैशेषिकसिद्धान्तानां गणितीयसिद्धान्तमूलकं विश्लेषणं विहितम्— २४-६०

८. उषारागोदया [ नाटिका ]—श्रीमद्रुद्रचन्द्रदेवविरचितेयम् उषारागोदया विदुषा डॉ० गौरीनाथशास्त्रिणा पाठभेदादिनिर्धारणपुरःसरं सम्पाद्य प्रकाशिता— २-००

९ स्तोत्रवल्लरी [ स्तोत्रसंग्रहः ] श्रीरघुनाथशर्ममहोदयेन विरचितेयं स्तोत्र-वल्लरी ध्रुवं संस्कृतवाङ्मयस्य श्रियं समेधयति— ३-५०

१०. चिद्गगनचन्द्रिका [ तन्त्रशास्त्रम् ] महाकविकालिदासविरचितोऽयं काव्यमयो ग्रन्थः श्रीरघुनाथमिश्रविरचितया क्रमप्रकाशिकाख्यया व्याख्यया प्रकाशितः— ६०-००

११. संस्कृत आयोग का प्रतिवेदन—भारत सरकार ने सन् १९५६ ई० में डॉ० सुनीतिकुमार चटर्जी की अध्यक्षता में 'संस्कृत आयोग' का गठन किया था। इस आयोग की मौलिक संस्तुति १९५८ ई० में ही अंग्रेजी में प्रकाशित हो गयी थी, जिसका राष्ट्रभाषा हिन्दी में सर्वप्रथम प्रकाशन किया गया है। यह ग्रन्थ संस्कृत-भाषा के चतुरस्र विकास की दिशा में रचनात्मक समाधान प्रस्तुत करता है— ३२-००

---

प्राप्तिस्थानम्–विक्रयविभागः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२.

पञ्जीकरणसंख्या—६९८१/५७

# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

## अभिनवप्रकाशनानि

| ग्रन्थनाम | मूल्यम् |
|---|---|
| १. शुक्लयजुर्वेदकाण्वसंहिता—उत्तरविंशतिः [ वेदः ] संहितेयं सायणभाष्य-सहिता प्रकाशिता— | २२-०० |
| २. वाक्यपदीयम्—तृतीयकाण्डस्य द्वितीयो भागः [ व्याकरणम् ] ग्रन्थरत्नमिदं हेलाराजप्रणीतया प्रकाशव्याख्यया तथा च श्रीरघुनाथशर्मविरचितया 'अम्बाकर्त्री'-व्याख्यया विभूष्य प्रकाशितम्— | १०७-०० |
| ३. व्याकरणदर्शनप्रतिमा [ व्याकरणम् ] आचार्यरामाज्ञापाण्डेयविरचितेऽस्मिन् ग्रन्थे व्याकरणशास्त्रस्य दार्शनिकपदार्थानां मौलिकं खलु समालोचनं कृतं वर्तते— | ३३-६० |
| ४. महाभाष्यनिगूढाकूतयः [ व्याकरणम् ] अनुसन्धानप्रबन्धोऽयं नूनम् आनुसन्धानिकफलश्रुतिभिः समेधितो वर्तते। लेखकः सम्पादकश्च—डॉ० देवस्वरूपमिश्रः— | २६-८० |
| ५. वैयाकरणानाम् अन्येषां च मतेन शब्दस्वरूपतच्छक्तिविचारः [व्याकरणम्] सनुसन्धानप्रबन्धोऽयं विदुषा डॉ० कालिकाप्रसादशुक्लेन लिखितः । प्रबन्धेऽस्मिन् शब्दस्वरूपतच्छक्तिविषये गवेषणात्मकं विश्लेषणं विहितम्— | २६-५० |
| ६. धात्वर्थविज्ञानम् [ व्याकरणम् ] गवेषणाप्रबन्धोऽयं बहुभाषासुज्ञेन गवेषणामर्मज्ञेन अनुसन्धानसंस्थाननिदेशकेन डॉ० भागीरथप्रसादत्रिपाठिना विरचितः। प्रबन्धेऽस्मिन् धात्वर्थविज्ञानानि प्रकामं समुल्लसन्ति— | २७-०० |
| ७. बौधायनशुल्बसूत्रम् [ शुल्बशास्त्रम् ] ग्रन्थोऽयं श्रीव्येंकटेश्वरदीक्षितविरचितया बोधायनशुल्बमीमांसाख्यया तथा च श्रीद्वारकानाथयज्वप्रणीयता बौधायनशुल्ब-सूत्रव्याख्यानाख्यया टीकयाऽथ च प्रभूतैः संवादात्मकैः रेखाचित्रैश्च सनाथीकृतः। सम्पादकः—श्रीविभूतिभूषणभट्टाचार्यः— | ७५-०० |
| ८. तन्त्ररत्नम्—पञ्चमो भागः [ मीमांसादर्शनम् ] पार्थसारथिमिश्रविरचितः टुप्टीकागनाथितो मीमांसाग्रन्थोऽयं साम्प्रतं सम्पादकपण्डितपट्टाभिरामशास्त्रि-विरचितया तात्त्विकया भूमिकया पाठभेदादिभिश्च विभूष्य प्रकाशितः— | ४६-६० |
| ९. तन्त्रसंग्रहः—तृतीयो भागः [ तन्त्रशास्त्रम् ] तन्त्रशास्त्रस्य विविधतन्त्र-संग्रहात्मकोऽयं ग्रन्थो बहुविधैरनुसन्धानात्मकैर्भूमिका-टिप्पण-परिशिष्टादि-भिश्च समुल्लसति— | ९२-२० |
| १०. रुद्रयामलम्—[ तन्त्रशास्त्रम् ] तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं विविधैः किल गवेषणापूर्णैः भूमिका-टिप्पण-परिशिष्टैश्च समलङ्कृत्य प्रकाशितम्— | ६४-०० |

**प्राप्तिस्थानम्—विक्रयविभागः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२.**